रजतजयन्ती-विशेषाङ्कः

ISSN-2320-3501

निरयणञ्च दृक्सिद्धं चित्रापक्षीयमुत्तमम् । जगन्नाथाख्यपञ्चाङ्गं सर्वार्थसिद्धिदायकम् ।।

# श्रीजगन्नाथपञ्चाङ्गम्

राजा - मंगलः
विक्रमाब्दः - २०८१
खीष्टाब्दः - २०२४-२५

**वर्षलग्नम्**

१० ८
मं.श. ११ ९ ७
१२ सू.चं.शु.रा. ६ के.
१ गु.बु. ३ ५
२ ४




मन्त्री - शनिः
शकाब्दः - १९४६
गतकल्यब्द - ५१२५

**जगल्लग्नम्**

९ ७
१० ८ के.६
मं.श. ११ ५
१२ सू.बु.शु.रा. २ ४
गु. १ चं. ३

नीलाचलनिवासाय नित्याय परमात्मने। बलभद्रसुभद्राभ्यां जगन्नथाय ते नमः।।

पञ्चाङ्गकर्ता प्रधानसम्पादकश्च- प्रो.मदनमोहनपाठकः (लब्धस्वर्णपदकः)
निदेशकः(Director) - ज्योतिर्विज्ञान-अनुसन्धान-केन्द्रम्, वेदानन्दाश्रमः, खरगापुर, गोमतीनगर, लखनऊ-२२६०१० (उ.प्र.)
फलित-सिद्धान्तज्योतिषाचार्यः, विद्यावारिधिः (पी-एच. डी), शिक्षाशास्त्री (बी.एड.)
वरिष्ठाचार्यः (Senior Professor) ज्योतिषविभागे
सहसम्पादकौ - श्रीवेदप्रकाशपाठकः (फलित-सिद्धान्तज्योतिषाचार्यः, Research Scholar) डॉ. आनन्दप्रकाशपाठकः सहायकाचार्यः (अ.) सिद्धान्तज्योतिषाचार्यः, विद्यावारिधिः
केन्द्रीयसंस्कृतविश्वविद्यालयस्य लखनऊ-परिसरः, विशालखण्डः-४, गोमतीनगरम् लखनऊ-२२६०१० (उ. प्र.)

वर्षम् - २५

www.vedanandashram.in

सहयोगराशिः - १०१/-

ISSN-2320-3501

# श्रीजगन्नाथपञ्चाङ्गस्य लोकार्पण-समारोह:



पञ्चाङ्गस्य लोकार्पणं कुर्वन्त:
पुरीस्थ-गोवर्धनपीठाधीश्वरा अनन्तश्रीविभूषित-
**जगद्गुरुशङ्कराचार्यश्रीनिश्चलानन्दस्वामीवर्य्या:**

महाशिवरात्रि:
सम्वत्- २०५६




पञ्चाङ्गस्य लोकार्पणं कुर्वन्त:
मानवसंसाधनविकासमन्त्रालयद्वारासञ्चालितस्य
नवदेहलीस्थितस्य
**राष्ट्रियसंस्कृतसंस्थानस्य निदेशका:**
**श्रीमन्त: प्रो. वेम्पटिकुटुम्बशास्त्रिमहोदया:**

१८ जनवरी २००१
सम्वत्- २०५७

## ॥ श्रीजगन्नाथपञ्चाङ्गम् ॥ ISSN-2320-3501

आद्यसंरक्षको दिग्दर्शकश्च-**स्व. पं कल्याणदत्तशर्मा,** (राष्ट्रपति-सम्मानितः)
भू.पू.अध्यक्षः(जन्तर-मन्तर) वेधशाला, जयपुर (राजस्थान)
सम्मानित-प्राध्यापकः श्री ला.ब.शा.रा.सं.विद्यापीठम्, नई दिल्ली-१६
सत्प्रेरकाः- **डॉ हरिहरझा,** (राष्ट्रपति-सम्मानितः)
भू.पू.प्राचार्यः, श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठम्, पुरी- १
**स्व. प्रो.शुकदेवचतुर्वेदी,**(राष्ट्रपति-सम्मानितः)
श्रीलालबहादुरशास्त्री, राष्ट्रियसंस्कृतविद्यापीठम्, नई दिल्ली-१६
**प्रो.ओंकारनाथचतुर्वेदी,**भू.पू.ज्यौतिषविभागाध्यक्षः
श्रीलालबहादुरशास्त्री, राष्ट्रियसंस्कृतविद्यापीठम्, नई दिल्ली-१६
**स्व. पं रामदेवझाः,**भू.पू.आचार्यः ज्यौतिषविभागे
श्रीलालबहादुरशास्त्री, राष्ट्रियसंस्कृतविद्यापीठम्, नई दिल्ली-१६
**प्रो.रामचन्द्रझाः,** भू.पू.आचार्यः ज्यौतिषविभागे
का.सिं.संस्कृतविश्वविद्यालयः दरभङ्गा, बिहार- ८४६००८
**प्रो.शिवाकान्तझाः,** भू.पू. आचार्यः ज्यौतिषविभागे
का.सिं.संस्कृतविश्वविद्यालयः, दरभङ्गा, बिहार- ८४६००८
**प्रो. सर्वनारायणझाः,** कुलपतिचरः, का.सिं.सं.वि.वि.दरभङ्गा, बिहार-८४६००८
वर्तमाननिदेशकः,केन्द्रीयसंस्कृतविश्वविद्यालयः, लखनऊपरिसरः
**स्व.पं. बैद्यनाथपाठकः,**पञ्चाङ्गकर्त्तुः पूज्यपिता, संस्थापकः-वेदानन्दाश्रमः
ग्राम-पटपरिया, पो.-रूपडीह-८४५४०१, मोतिहारी, पूर्वीचम्पारण, बिहार



**पञ्चाङ्गकर्त्तारः -**
**प्रो. मदनमोहनपाठकः** वरिष्ठाचार्यः, ज्योतिषविभागः
केन्द्रीयसंस्कृतविश्वविद्यालयः, लखनऊ-परिसरः, लखनऊ-२२६०१०, उ.प्र.
www.**vedanandashram.in** email:- **profmmpathak@gmail.com**
**सहायकसम्पादकाः-**
डॉ.दीनदयालत्रिपाठी, डॉ.शैलेशकुमारतिवारी, डॉ.ज्योतिप्रसाददाशः, डॉ.पुरुषोत्तमकुमारः, डॉ.बालकिशोरतिवारी, डॉ.विकासआङ्गिरसः, डॉ.गिरिराजः, श्रीवेदप्रकाशपाठकः, डॉ.आनन्दप्रकाशपाठकः, सुश्रीविभा, श्रीप्रिंसकुमारपाण्डेयः, श्रीअभिनवकुमारद्विवेदी


**।। ॐश्रीजगन्नाथाय नमः ।।**

प्रथम-प्रस्तावना

**वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्वा विहिताश्च यज्ञाः।**
**यस्मादिदं कालविधानशास्त्रं यो ज्योतिषं वेद स वेद यज्ञान् ।।**

वैदिक-लौकिक-धर्मशास्त्रीयकृत्यानां सम्पादनार्थं तत्सम्बन्धिशुभा-शुभफलादेशार्थं तस्य कालनिर्धारणार्थञ्च ज्योतिषशास्त्रं प्रवर्तते। यतो हि शास्त्रस्यास्य कालविधायकत्व-मभिहितमस्ति। कालः सृजति भूतानि कालः संहरते प्रजाः इति वचनेन कालज्ञानं नितरामपेक्षते। सूर्यादयो ग्रहाः अश्विनी-प्रभृतिनक्षत्राणि कालविधानस्य मूलाधारत्वेनाख्यातानि सन्ति। तेषां गतिं स्थितिञ्च ज्ञानार्थं ज्योतिर्विदः निर्माय पञ्चाङ्गं लोकानुपकुर्वन्ति। पञ्चाङ्गे ग्रहस्थितिवशादेव तिथि-वार-नक्षत्र-योग-करणानि विभिन्नव्रतोपवासमुहूर्त्तानि च मुख्यतया प्रतिपादितानि भवन्ति। पञ्चाङ्गनिर्माण-परम्परायामनेकेषु क्षेत्रेषु अनेकानि पञ्चाङ्गानि निर्मितानि भवन्ति। तेषु दृक्सिद्धपञ्चाङ्गस्य समादरो भवति । यथोक्तम्-

**यात्राविवाहोत्सवजातकादौ खेटैः स्फुटैरेव फलस्फुटत्वम्।**
**स्यात्प्रोच्यते तेन नभश्चराणां स्फुटक्रिया दृग्गणितैक्यकृद्या ।।** *-सिद्धान्तशिरोमणिः*

**तत्तद्गतिवशान्नित्यं यथा दृक्तुल्यतां ग्रहाः ।**
**प्रयान्ति तत्प्रवक्ष्यामि स्फुटीकरणमादरात्।।** *-सूर्यसिद्धान्तः*

**तेभ्यः स्याद् ग्रहणादिदिक्सममियं प्रोक्ता मया सा तिथिः ।**
**ग्राह्या मङ्गलधर्मनिर्णयविधावेषा यतो दृक् समा ।।**- *तिथिचिन्तामणिः*

अतः सम्प्रति दृक्सिद्ध-पञ्चाङ्गनिर्माण-पद्धतिषु श्रीवेंकटेशबापूशास्त्रि-केतकरमहोदयस्य पद्धतिः सर्वतोऽर्वाचीनः दृक्सिद्धश्चेति विचिन्त्य श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठस्य ज्यौतिषप्राध्यापकेन आयुष्मता डॉ.मदनमोहनपाठकेन स्वीयैः सहयोगिभिः महता श्रमेण दत्ताऽवधानेन च पञ्चाङ्गमिदं सम्पादितमिति समेषां धर्मानुरागि-सज्जनानां कृते सन्तोषावहो विषयः। जायतां पञ्चाङ्गमिदं जगन्मङ्गालायेति शम् ।

मकरसंक्रान्तिः 2000 — **डॉ. हरिहरझाः** (राष्ट्रपति-सम्मानितः)
दरभङ्गा — पूर्व-प्राचार्यः,
श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठम्, पुरी-1

**संरक्षकः- श्रीशिवाकान्तद्विवेदी (आई. ए. एस.) श्रीधुवकान्तठाकुर, (आई.पी.एस.) लखनऊ, श्रीतेजस्करपाण्डेयः (आई. ए. एस.)**

# विषयानुक्रमणिका



।। हरिः ॐ।।

# विविधविषयानां-विषयानुक्रमणिका



**पञ्चाङ्गप्राप्तिस्थानम् -**


श्रीरामचन्द्रस्वामीसेवाश्रम, लोकनाथरोड, पुरी, उडिशा
डॉ.प्रभातकुमारमहापात्र, ज्यौतिषविभागाध्यक्ष, मो.- 09437232477
केन्द्रीय-संस्कृत-विश्वविद्यालय, एकलव्यपरिसर, अगरतला, त्रिपुरा 799210।
डॉ.जयप्रकाशचौधरी, ज्यौतिषव्याख्याता, मो.-09818426243।
श्रीसन्तनागपालसंस्कृतमहाविद्यालय, छत्तरपुर, नईदिल्ली-110030,
पं.नन्दकिशोरतिवारी, दूरभाषः- 098327-36827, बीरीडङ्गाल (भाटापारा),
पो. बराकर-713324, जिला-बर्दवान, पश्चिम-बङ्गाल ।
वेदानन्दाश्रम- न्यू वेलबनवा, टाउन थाना से पूर्व, मोतिहारी- 845401
वेदानन्दाश्रम-(शाखा)(नजदीक-महेश इण्टर कॉलेज) गीतापुरी, खरगापुर, गोमतीनगर, लखनऊ-226010 सम्पर्कसूत्र- 9455437066, 7007797813
**www.vedanandashram.in** e-mail- profmmpathak@gmail.com

# विदुषां शुभसम्मतयः

***Professor H. K. Satapathy***
M.A.,LL.M,PH.D.sahitya-puran-Acharya
VICE-CHANCELLOR
Shri Jagannath Sanskrit Vishvavidyalaya
Srivihar, Puri (Orissa)

22663(Off)
22640(Res)
24568(Res)
Fax:(06752)25673 Off)
Date:20.10.2000

## शुभाशंसनम्

**वेदा हि यज्ञार्थमभिप्रवृताः कालानुपूर्वा विहिताश्च यज्ञाः।**
**तस्मादिदं कालविधानशास्त्रं यो ज्योतिषं वेत्ति स वेद यज्ञान्।।**

अनया दृष्ट्या ज्योतिषशास्त्रस्य मानवजीवने महती आवश्यकता विद्यते । कालः सृजति भूतानि कालः संहरते प्रजाः इत्यनेन कालविधानशास्त्रस्य शास्त्रान्तरापेक्षया गौरवमनस्विकार्यं महत्वञ्चा-वर्णनीयमित्यपि वक्तुं शक्यते । मानवसमाजस्य भूयसे कल्याणाय विशिष्टसंस्कृतविदुषा पण्डित-डॉ.मदनमोहनपाठकमहोदयेन एकं प्रामाणिकं निर्भरयोग्यञ्च पञ्चाङ्गं भगवतः श्रीजगन्नाथस्य नाम्ना श्रीजगन्नाथपञ्चाङ्गमिति प्रणीतम् । बहुविषयसम्वलितं दृकसिद्धं पञ्चाङ्गमेतत् मानवसमाजस्य बहुविधकल्याणं साधयतीत्यत्र नास्ति काऽपि विप्रतिपत्तिः पञ्चाङ्गमिदमस्माकं न केवलमुत्कलवासिनाम् अपितु समेषां भारतवासिनाञ्च महते कल्याणाय सम्पत्स्यते इति मम द्रढीयान् विश्वासः पञ्चाङ्गकर्त्तुः आचार्य डॉ.पाठकमहोदयस्य कृते शुभाभिनन्दनं विनिवेद्य श्रीजगन्नाथपञ्चाङ्गस्य बहुलप्रसारं कामये ।

**प्रो.हरेकृष्णशतपथी**

**श्रीअरुणकुमारउपाध्यायः,**(I.P.S.) उडिशा संवर्ग
M.Sc. (Math) A.I.F.C.
मोब. -९४३७०३४१७२
B.9, C-B-9, Cantonment Road
Cuttack, (Orissa)

# शुभाशंसनम्

सृष्टि-लोकरचना-देवतत्त्व-ग्रहगति-कालनिर्धारणादीनामेकमात्रं ज्ञानात्मकं साधनभूतं ज्यौतिषम्। सर्वाणि लोकव्यवहाराणि दिक्-देश-कालानुसारेण प्रचलन्ति। वेदाङ्गेषु लोचनरूपस्य ज्यौतिषशास्त्रस्य परम्परा उत्कलप्रदेशे म.म. चन्द्रशेखरसामन्तस्य सिद्धान्तदर्पणेन सुरक्षिता। तां दृक्सिद्ध-परम्परां संरक्षणाय शास्त्रस्यास्य प्रचार-प्रसाराय निरयणं दृक्सिद्धं चित्रापक्षीयमिदं श्रीजगन्नाथपञ्चाङ्गं प्रवर्तितमस्ति। शास्त्रस्य अस्य प्रचाराय पञ्चाङ्गकर्त्तुः सर्वविधविकासाय च भगवन्तं जगन्नाथं प्रार्थये । इत्थं मदनमोहनपाठकशर्मणः कृतिरियं सुयशः फलमाप्नुयादिति शुभं कामयते ।

**अरुणकुमारउपाध्यायः,** सिद्धान्तदर्पणव्याख्याता

जगद्गुरुरामानन्दाचार्य
**राजस्थानसंस्कृतविश्वविद्यालयः**
ग्राम-मदाऊ, पोस्ट- भांकरोटा,
जयपुरम् - 302026 (राज.)
e-mail: kvrkus@yahoo.com
website: jrrsanskrituniversity.ac.in



प्रो. के. वी. रामकृष्णमाचार्यः
कुलपतिः
Prof. K.V. Ramakrishnamacharyulu
Vice-Chancellor
0141-5132001 (O) 5132002 (R)
09414065613(M)

## आशीर्वाक्

**तिथेश्च श्रियमाप्नोति वारादायुष्यवर्धनम् । नक्षत्राद्धरते पापं योगाद्रोगनिवारणम् ।।**
**करणात्कार्यसिद्धिस्तु पञ्चाङ्गफलमुत्तमम्। कालवित्कर्मकृद्धीमान् देवतानुग्रहं लभेत्।।**

वैज्ञानिकयुगेऽस्मिन् वेदस्य निर्मलचक्षुर्भूतस्य ज्योतिश्शास्त्रस्य तदाधृत्य प्रवर्त्तमानस्य पञ्चाङ्गस्य च महद्वैशिष्ट्यं प्रत्यक्षमेव प्रतिभाति ।

**श्रीमत्कामितदायि कल्मषहरं दुर्दोषशान्तिप्रदं नानायज्ञविशेषलभ्यफलदं भूदानतुल्यं नृणाम्।**
**आरोग्यायुरभीष्टदंशुचिकरंसन्तानसौख्योदयंपुण्यंकर्मसुसाधनंश्रुतिहितंपञ्चाङ्गमाकर्ण्यताम्।।**

राष्ट्रियसंस्कृतसंस्थानस्य गरलीपरिसरे ज्योतिषशास्त्रविभागाध्यक्षरूपेण कार्यं कुर्वता ज्योतिर्विदाऽऽयुष्मता डॉ मदनमोहनपाठकेन ऐदं प्राथम्येन देववाण्यां गैर्वाण्यां श्रीजगन्नाथपञ्चाङ्गं विरचय्य मुद्राप्यत इति परमामोदकोऽयं विचारसारः। पञ्चाङ्गे दृक्सिद्धान्ताधारेण उपस्थापिता विषयाः शास्त्रसम्मताः आचारविहिताः सर्वलोकोपयोगिनश्च सन्ति। एका क्रिया द्व्यर्थकरीति वचनानुसारं पाठकमहोदयः पञ्चाङ्गरचनया साकं संस्कृतभाषाप्रचारमपि विदधातीति मोमुद्यते मदीयं मनः। अभिनन्दे च पाठकमहोदयस्यामुं साधूद्यमम्। पञ्चाङ्गमिदं सामान्यजनानां दैनन्दि-नोपयोगायच्छात्राणां, शिक्षकाणां जिज्ञासूनां ज्ञानवर्धनाय, पण्डितानां प्रमोदाय लोककल्याणाय भवतीति मे दृढसम्प्रत्ययः। प्रार्थये जगन्नाथं गोविन्दं पठन-पाठन-पञ्चाङ्गनिर्माण-ग्रन्थलेखनादि-कर्मसु बद्धश्रद्धं पाठकमहोदयमिमम् आयुरारोग्यैश्वर्यादिप्रदानेनाभिरक्षतादिति ।

**स्थानम्- राजस्थानसंस्कृतविश्वविद्यालयः**
**दिनाङ्कः- 21 जनवरी 2008**

21.01.08

## शुभाशंसनम्

षट्सु वेदाङ्गेषु ज्योतिषशास्त्रस्य नेत्राङ्गत्वं सुप्रसिद्धम्। मानवजीवने श्रुति-स्मृति-पुराणोक्तनिखिलोत्सवानां संस्काराणां व्रतादीनाञ्च विहितकालज्ञानमनेन शास्त्रोक्तविधिना रचितपञ्चाङ्गमाध्यमेनैव भवति। पञ्चाङ्गस्य स्फुटत्वं दृक्सिद्ध-स्फुटग्रहैरेव भवितुमर्हति। अतः पञ्चाङ्गस्यास्य प्रधानसम्पादकेन केतकीयग्रहगणितसिद्धान्तनिर्मितं दृश्यपञ्चाङ्गमिदं सूक्ष्मं लोकोपकार-युक्तं भवेदिति मन्ये।

**प्रो. शिवाकान्तझा**

दि. 3.2.2000
आचार्यः,ज्यौतिषविभागे, का.सि.सं विश्वविद्यालयः,दरभङ्गा

# शुभाशंसनम्

वेदो हि भारतवर्षस्य सर्वस्वम् । वेदस्य षडङ्गानि प्रसिद्धान्येव सन्ति। तेषु ज्यौतिषशास्त्रस्यात्यन्तं महत्त्वं सर्वेऽपि सहृदयाः सुधियः स्वीकुर्वन्त्येव। इत्थं ज्यौतिषशास्त्रन्तु जीवनस्य सर्वान् क्रियाकलापान् प्रतिक्षणं प्रभावयति। शास्त्रस्यास्याधारभूतं तत्त्वं भवति पञ्चाङ्गम्। पञ्चाङ्गमुपजीव्यैव सामाजिकाः स्वीयानि सर्वाण्यपि कर्माणि सम्पादयन्ति। पञ्चाङ्गनिर्माणकार्यं न केवलं कठिनमपितु समयसापेक्ष्यमपि। स्वकीयं सर्वमपि कार्यं निर्वहन्तोऽपि पञ्चाङ्गनिर्माण-कार्यं सम्पादयन्तः ज्यौतिषशास्त्रे कृतभूरिपरिश्रमाः आयुष्मन्तः डॉ.पाठकमहोदयाः प्रशंसनीयं कार्यं कुर्वन्तीति निश्चप्रचम्। पञ्चाङ्गमिदं सामाजिकानां ज्यौतिषजिज्ञासूनां च कृते नितरां लाभप्रदमस्ति। पञ्चाङ्गेऽस्मिन् सर्वेषामप्यावश्यकतत्त्वानां निरूपणं कृतमस्ति। भगवतो जगन्नाथस्य कृपया सर्वदैव कार्यमिदं निर्विघ्नं सेत्स्यतीति दृढ़ो मे विश्वासः।

दिनाङ्कः- २१/११/२००७ — **प्रो. सुरेन्द्रझाः**, प्राचार्यः,
हरिप्रबोधिनी एकादशी, — राष्ट्रियसंस्कृसंस्थानम्, गरलीपरिसरः,

---

अस्माकमार्यजातीयानां सर्वापि क्रिया सूर्योदयात् सूर्योदयं यावत्कालाधीना वर्तते । कालज्ञानञ्च ज्योतिषशास्त्रेण सम्पद्यते । ज्योतिषशास्त्रमाधृत्य पञ्चाङ्गनिर्माणे परम्पराद्वयी । एका रैवतपक्षीया, अपरा चित्रापक्षीया च । तत्रापि पञ्चाङ्गनिर्माणे धर्मशास्त्रेषु वर्णितानां पर्वणां निर्णयः प्रामुख्येण क्रियते । निर्णयसिन्धौ धर्मसिन्धौ च वर्णितानां पर्वणां १५६१ संख्या भवति। तत्रापि सम्प्रदायभेदात् तत्सेवने काल-भेदः सुस्पष्टम् । तच्च कालज्ञानं ज्योतिश्शास्त्रेण भवतीति कृत्वाऽस्मन्मित्रवर्येण दैवज्ञेन डॉ.श्रीमदनमोहनपाठकेन चित्रापक्षमाधृत्य श्रीजगन्नाथपञ्चाङ्गस्य प्रकाशनं क्रियते। एतत्पञ्चाङ्गमाश्रित्य यथाकालं धर्मसेवने आर्यजातीयानां प्रवृतिर्भूयादिति कामयते।

**विद्यावाचस्पतिः हरिनारायणतिवारी**

दि. ९/१/२००२, — प्रवाचकः, व्याकरणविभागे,
केन्द्रीय संस्कृत विद्यापीठ, गरली- १७७१०

---

श्रीजगन्नाथपञ्चाङ्गमिति नाम्ना संस्कृभाषायां मित्रवर्येण डॉ.पाठकमहोदयेन ज्योतिषशास्त्ररहस्यैरुपनिबद्धं, प्रकाशितञ्च पञ्चाङ्गं सर्वतो मयाऽवलोकि। सामान्यजनानां, सर्वेषां विदुषाञ्चेदं पञ्चाङ्गं महते लाभाय कल्पत इत्यत्र नास्ति संशयलेशः । पञ्चाङ्गे निर्दिष्टा समस्ता अंशाः सप्रमाणाः, समसामयिकाः, लोकोपकारिणश्च सन्ति। पुनश्च संस्कृतभाषायाः प्रचारप्रसारो भवतीति विशेषो विशेषः। अभिनन्दे श्रीपाठकमहोदयं, कामये अस्य पञ्चाङ्गस्य विपुलप्रचारो भवतात्, प्रार्थये च निलाद्रिनाथं जगन्नाथं यदमुष्यै सर्वविधमङ्गलं विदधात्विति ।

**श्रीजगन्नाथपञ्चाङ्गं ज्योतिर्विद्याप्रकाशकम्। राजते भारते राष्ट्रे गैर्वाण्या समलङ्कृतम्।।**

ग्राम-मदाऊ, पोस्ट- भांकरोटा, — **डॉ. के साम्बशिवमूर्तिः**, सहाचार्यः (शिक्षा),
जयपुरम्-302026(राज.) — जगद्गुरुरामानन्दाचार्यराजस्थानसंस्कृतविश्वविद्यालयः-
Date:- 20 Jan 2008 — 09928525565(मोबा.)

---

# शुभाशंसनम्

**प्रो.राजेन्द्रमिश्रः**
कुलपतिचरः,
श्रीसम्पूर्णानन्दसंस्कृविश्वविद्यालय, वाराणसी,

Residence:- Teacher`s Colony, Loury ,
Summer Hill, Shimla - 05
094181-76968 (M)
Date:- 30 March 2008

स्वस्ति,

मिश्रोऽभिराजराजेन्द्र आत्मीयप्रवरमाचार्यश्रीमदनमोहनपाठकं सप्रणयमभिनन्दति जयजीववचोभिः । समवाप्य भवत्प्रेषितं श्रीजगन्नाथपञ्चाङ्गं महान् प्रमोदस्समजनि । तत्राऽत्मापेक्षिताः सर्वेऽपि दैनन्दिनसमाचाराः सम्यक्तया विलसन्ति। किञ्च, पञ्चाङ्गविषयिणी भवदीया मनोरमा शैल्यपि साधु प्रभावत्येव । शुभं कामयन् विरमति -

**प्रो.राजेन्द्रमिश्रः**

---

प्राध्यापक डॉ.मदनमोहनपाठकशर्मभिः सम्पादितं नूतनवर्षस्य पञ्चाङ्गं दृष्टम्। गणना दृष्ट्या विविधविषयसङ्कलनदृष्ट्या च यथैतन्निर्दोषं तथैव धर्मशास्त्रीयव्रतोत्सवादिकमस्य शास्त्रसम्मतं वर्तते। विद्वज्जनैः साधारणजनैश्चावश्यमेवादृतं भविष्यति। एतदर्थं श्रीपाठकमहोदयाः धन्यवादार्हाः। आशाशे, एते महोदया इमं साधूद्यममग्रेसारयिष्यन्तीति शुभं कामयते।

आवासः- गान्धीनगर, पो. जटनी, — **पं. परशुरामशास्त्री,**
मण्डलम्- खोर्द्धा- 752052 — अवसरप्राप्तः प्रवाचकः,
दिनाङ्कः- 26/12/2001 — श्री स.शि.के.सं.विद्यापीठम्, पुरी

---

वेदाङ्गे ज्योतिषस्य माहात्म्यं सर्वजनविदितमेव । सर्वाण्यपि श्रुति-स्मृति-पुराणोक्तानि नित्य-नैमित्तिक-काम्यकर्माणि पञ्चाङ्गाश्रितानि भवन्तीति सुधयः संविदन्त्येव। अनेन पञ्चाङ्गस्य महत्ता, लोकोपयोगिता, आवश्यकता च सर्वेऽपि आस्तिकाः अनुभवन्ति। अस्याः आवश्यकतायाः पूर्त्तये महाप्रभोः भगवतः जगन्नाथस्य नाम्ना नामितमिदं श्रीजगन्नाथपञ्चाङ्गं समेषामजस्रमुपकाराय स्यादिति भगवन्तं नीलाद्रिनाथं जगन्नाथं अभ्यर्थये।

**आचार्य (डॉ.) विनोदकुमारशर्मा**, अध्यक्षः ज्यौतिषविभागे
जगद्गुरुरामानन्दाचार्य राजस्थानसंस्कृतविश्वविद्यालयः, ग्राम-मदाऊ, पोस्ट-भांकरोटा, जयपुरम्-26

---

**सुहृद्सद्भावनाः**

एम.एम.पाठकवर्येण पाठितं भाषितं सदा। तत्सर्वं ग्रथितं तेन ग्रन्थरूपेण राजते।।
ग्रन्थराजमिमं भाति जगन्नाथस्य भाषया। तथा लोके जगन्नाथो भासते भास्करो यथा।।
तद्वदेव हि पञ्चाङ्गं जगन्नाथाख्यभूषितम्। मूर्तित्रयमुखाभासैः भासतां भुवनत्रयम्।।
ज्योतिःशास्त्रमिदं नेत्रं सर्वेषां दिग्दर्शकम्। यदाजीवनपर्यन्तं निमीलनमसम्भवम्।।
तस्मात् विज्ञजनाः सर्वे ह्याश्रयन्तु सदा भुवि। श्रीजगन्नाथपञ्चाङ्गं धर्मार्थकाममोक्षदम्।।
**सुहृत्सद्भावना** प्रोक्ता के.बी.यस्.आरसूरिणा । विधातुं मङ्गलं नित्यं पञ्चाङ्गं सुमनोरमम्।।

हरिप्रबोधिनी एकादशी, संवत्- 2067 — **प्रो.के.बी.सुब्बरायुडु**, प्र.प्राचार्यः,
गरलीपरिसरः — राष्ट्रियसंस्कृसंस्थानम्,

।। श्रीगणेशाय नमः ।।

## आत्म-निवेदनम्



**यद्भासा भासते नित्यं जगदेतच्चराचरम् । तमादिपुरुषं देवं भास्करं समुपास्महे ।।**

अखण्ड-ब्रह्माण्ड-नायकस्य महाप्रभोः भगवतः जगन्नाथदेवस्य प्रेरणया, सर्वशक्तिस्वरूपाया भगवत्या जगदम्बायाः च कृपया सर्वप्रथमं विश्वविश्रुते श्रीक्षेत्रे श्रीजगन्नाथधाम्नि पञ्चाङ्गस्य दृश्यगणनानुसारं सम्पादनमारब्धम्। तदनन्तरं विगते एकविंशतिशताब्द्याः प्रथमे दशके सारस्वतयज्ञमिदं देवभूमौ हिमाचले प्रचलितम् । तदनु द्वितीये दशके लखनऊनगरे सारस्वतयज्ञमिदं सम्पन्नतामगात्। तदिदानीं पुनः तां परम्परामनुसृत्यैव स्वान्तः सुखाय बहुजनहितायेति दृष्ट्या हिमाचल-प्रदेशे भारतसर्वकारेण सञ्चालिते केन्द्रीयसंस्कृताविश्वविद्यालयस्य वेदव्यास-परिसरे निदेशकपदे कार्यं कुर्वता मया पञ्चाङ्गप्रकाशनयज्ञमिदं सम्पाद्यते। अस्मिन् कर्मणि बहूनां महच्चरणानां गुरुजनानां, सुहृदां, छात्राणाञ्च प्रत्यक्ष-परोक्षरूपेण सहयोगो मया प्राप्यते। तेषां समेषां कृते कार्त्तज्ञं विज्ञापयामि। तेषु सर्वप्रथमं स्मर्यन्ते केन्द्रीयसंस्कृताविश्वविद्यालयस्य कुलपतयः **प्रो.श्रीनिवासवरखेड़ीवर्य्याः**, कुलसचिवाः **प्रो.आर.जी.मुरलीकृष्णन् महोदयाः**, लखनऊ-परिसरस्य निदेशकाः **प्रो.सर्वनारायणझामहोदयाः**, के.सं.विश्वविद्यालयस्य अधिष्ठाता-छात्रकल्याण **प्रो.मदनमोहनझामहोदयाः**, एकलव्यपरिसरस्य निदेशकाः **प्रो.प्रभातकुमारमहापात्रमहोदयाः**, जयपुर-परिसरस्य ज्योतिषविभागाध्यक्षाः **प्रो.ईश्वरभट्टमहोदयाः**, डॉ.विष्णुकुमारनिर्मलमहोदयाः, भोपालपरिसरस्य डॉ.उमेशकुमारपाण्डेयमहोदयाः, लखनऊपरिसरस्य प्रो.श्यामदेवमिश्र-डॉ.हरिनारायणधरद्विवेदी-डॉ.चन्द्रश्रीपाण्डेय-डॉ.अनिरुद्धनारायणशुक्ल-डॉ.अश्विनीपाण्डेयमहोदयाः, पुरीपरिसरस्य डॉ.ज्योतिप्रसाददाशप्रभृतयो विभागीयाचार्याः, शृङ्गेरीपरिसरस्य निदेशकाः **प्रो.हंसधरझामहोदयाः**, मुम्बईपरिसरस्य **प्रो.भारतभूषणमिश्रमहोदयाः** एवञ्च रेलवेविभागीयाधिकारिणः **श्रीरामचन्द्रपाण्डेयमहोदयाः**, श्रीरामचन्द्रस्वामी-सेवाश्रमस्य अध्यक्षः **महन्थश्रीइन्दिरारमणरामानुजदास-वर्यः**, **महन्थ-श्रीरामानुजाचार्यवर्यः** श्रीनिवासआश्रमः पुरी, तथा इह सर्वेऽपि सहायक-सम्पादनसमिते सर्वे सदस्याः विशेषेण धन्यवादार्हाः सन्ति, येषां सर्वविध-सहयोगः सर्वथा अविस्मरणीयो वर्तते। एवमेव शुभसम्मतीः प्रदातारः शुभेच्छवः सुधियः, एवं ज्यौतिष-विभागस्य **अंशु-राजेश-अमन-सूर्यांशप्रभृतयः** सर्वे छात्राः येषां सहयोगेन सततप्रोत्साहप्रदानेन च कार्यमिदं सुसम्पन्नतां प्राप्नोतीति मत्वा तेषां समेषामजस्रमभ्युदयाय भगवन्तं जगन्नाथं भगवतीं जगदम्बाञ्च प्रार्थये। सर्वान्ते प्रकाशनकर्मणि टङ्कणजन्यदोषाद् बुद्धिभ्रमदोषाच्च या अशुद्धयस्ताः कृपया स्वबुद्ध्या स्वयमेव संशोध्य व्यवहरन्तः स्वोपदेशामृतैः संसूच्य सफलीकुर्वन्तु ममोद्यमं गुणैकपक्षपातिनो विद्वांस इति-

दि. २४/१०/२०२३
मंगलवासरः
संवत् २०८०, विजयादशमी

निवेदयति

मदन मोहन पाठकः

## श्रीगणेशाय नमः



# श्रीजगन्नाथपञ्चाङ्गम्

**पञ्चाङ्गश्रवणफलम् -**

**तिथिर्वारश्च नक्षत्रं योगः करणमेव च ।**
**पञ्चाङ्गस्य फलं श्रुत्वा गङ्गास्नानफलं लभेत् ।।१।।**
**राज्यं स्यादचलं नृपश्रवणतो मन्त्रिश्रवात् कौशलं**
**धान्येशात् कमला स्थिरा च सुरसा वाणी भवेन्मेघपात् ।।**
**धर्मे बुद्धिरतिस्थिरा रसपतेर्दीर्घायुराप्तिर्भवेत्**
**सस्येशाद्विमला मतिः शुभकरी राजावली श्रूयताम् ।।२।।**
**श्रीकल्याणगुणावहं रिपुहरं दुस्स्वप्नदोषापहं**
**गङ्गास्नानविशेषपुण्यफलदं गोदानतुल्यं नृणाम् ।।**
**आयुर्वृद्धिदमुत्तमं शुभयुतं सन्तानसम्पत्प्रदं**
**नानाकर्मसुसाधनं समुचितं पञ्चाङ्गमाकर्ण्यताम् ।।३।।**

अथास्मिन् वत्सरे वर्तमानकल्पारम्भतः ससन्धयः षण्मनवो व्यतीताः, वर्त्तमानो वैवस्वतमनुः तस्य प्रवृत्तेः सप्तविंशतिमितानि महायुगानि व्यतीतानि, अष्टविंशतितमे युगे, त्रयो युगचरणाः गताः, अत्र सत्ययुगप्रमाणम् - १७,२८,०००, त्रेतायुगप्रमाणम्- १२,९६,०००, द्वापरयुगप्रमाणम्- ८,६४,०००, कलियुगप्रमाणम्- ४,३२,०००, चतुर्थ-चरणे कलौ कलेरारम्भतो गतकलिः-५१२५, भोग्यकलिः-४,२६,८७५, कल्पादितः-१९७२९४९१२३, सृष्ट्यादितः १९५५८८५१२५, श्रीरामरावणयोर्युद्धतो गतवर्षाणि - ८८०१६६, श्रीकृष्णावतारात् गतवर्षाणि - ५२६०, महाभारत-युद्धाद् गतवर्षाणि- ५१२५, श्रीमहावीर(जैन)निर्वाणात् गतवर्षाणि- २५५०, विक्रमाब्दः-२०८१, शकाब्दः-१९४६, श्रीबुद्धसम्वत्सरः-२६४८-४९, श्रीलक्ष्मण-सम्वत्सरः- ९१५-९१६, आङ्गलाब्दः- २०२४-२५, सन्- १४३१ साल, तत्र बार्हस्पत्यमानेन प्रभवादि-षष्ट्यब्दानां मध्ये वर्षारम्भे कालयुक्तनामकसम्वत्सरस्तत्संख्या ५२, अस्य मेषार्कसमये गतमासादिः १/१०/३३/३६, भोग्यमासादिः ११/०१/२६/२४ ।। एतदनुसारं कालयुक्तसम्वत्सरारम्भः १९४५ शकाब्दस्य फाल्गुनशुक्ल ५ गुरुवासरे दिवा १२/२२ वादने प्रारम्भः सञ्जातः वर्तते। अयं सम्वत्सरः १४ मार्च २०२५ दिनाङ्के २१/३२ वादनं यावत् स्थास्यति। अनन्तरं सिद्धार्थीसम्वत्सरः प्रारभ्स्यते। अतः आवर्षान्तं सङ्कल्पादौ **कालयुक्तसम्वत्सरस्य** प्रयोगो विधेयः। अत्र युगं नाम नासत्यदैवतं, वर्षनाम आश्विनः, मेघनाम आवर्तः, रोहिणी-निवासः तटे। समयनिवासः रजकगृहे।

**अथ वर्षादि विश्वाज्ञानम्-** वर्षेऽस्मिन् वर्षाविश्वा ५, धान्यं- ११, शीतं १३, तृणं ५, तेजः १७, वायुः १३, वृद्धिः १५, क्षयः १५, विग्रहः ११, ऐक्यम् १०५, सत्यम्- ।।, धर्मः-१।।, पापम् १८ । **अथ क्षुधादि विश्वा-** क्षुधा-१, तृष्णा- ७, निद्रा-१३, आलस्यम्- १३, उद्यमः- ११, शान्तिः- १३, क्रोधः- ११, दम्भः-३, मैत्री-१३, उत्सवः- ११, पापः-९, पुण्यः-९।

**वर्षादौ केतकीयायनांशाः**-२४/१०/४१ **ग्रहलाघवीयायनांशाः**- २५/०२/००

।। हरिः ॐ ।।

### अथ वर्षेऽस्मिन् कालयुक्तसम्वत्सरः (५२) तत्फलम् -

**विग्रहो जायते घोरः सर्वशस्यमहार्घता ।**
**पार्थिवाश्च प्रजा देवि! कालयुक्ते प्रपीडिते ।।**

कालयुक्तसम्वत्सर में विग्रह, महर्घता, राजकष्ट एवं प्रजाकष्ट होते हैं। इस वर्ष कालसंवत्सर है। अतः प्रजावर्ग को धर्मार्जन का आश्रय लेना चाहिए।

### राजा भौमस्तत्फलम् -

**भौमे नृपे वह्निभयं जनक्षयं चौराकुलं पार्थिवविग्रहञ्च ।**
**दुःखं प्रजाव्याधिवियोगपीडा स्वल्पं पयो मुञ्चति वारिवाहः ।।**

इस वर्ष आकाशीय ग्रहमण्डल में राजा मङ्गल है। अतः इस वर्ष अग्निकाण्ड की विभिषिकता से जनता सन्त्रस्त होगी। चोरों का आतङ्क, राज्याधिकारियों में परस्पर वैर तथा प्रजावर्ग में व्याधियों, तथा अनेक प्रकार के वियोगजन्य कष्टों की सम्भावना है। वृष्टि भी अच्छी नहीं होगी, कही अतिवृष्टि तो कहीं अनावृष्टि का योग है।

**(२) मन्त्री शनिस्तत्फलम् -**

**रविसुते यदि मन्त्रिणि पार्थिवा विनयसंरहिता बहुदुःखदा ।**
**न जलदा जलदा जनतापदा जनपदेषु सुखं धनजं क्वचित् ।।**

इस वर्ष आकाशीय मन्त्री-मण्डल में मन्त्री का अधिकार शनि को प्राप्त है। अतः राजा विनयहीन, प्रजावर्ग अतिशय दुःखी तथा वर्षा की स्वल्पता से धनधान्य की उत्पत्ति स्वल्प होने के योग हैं। जनतावर्ग विभिन्न आपदाओं के शिकार होंगे। जनपद में धन-धान्य समृद्धिजन्य सुख की प्राप्ति क्वचित् ही दिखेगी।

**(३) अथ मेघेशो शुक्रस्तत्फलम् -**

**भृगु सुतो जलदस्य पतिर्यदा जलमुचो जलदा ननु शोभना ।**
**धननिधानयुता द्विजपालको नृपतयो जनतासुखदायकाः ।।**

इस वर्ष आकाशीय ग्रहमन्त्री-मण्डल में वर्षा विभाग का अधिकारी शुक्र है। अतः अच्छी वृष्टि होने की संभावना है। राज्याधिकारी-गण धन-धान्य से युक्त होकर प्रजापालन में संलग्न रहेंगे ।

**(४) सस्येशः भौमस्तत्फलम् -**

**प्रथमधान्यपतौ धरणीपतौ गजतुरङ्गखरोष्ट्रगवामपि ।**
**प्रभवदा बहुरोगघनौ जलं नसमसौख्यकरं तुषधान्यहृत् ।।**

इस वर्ष कृषिविभाग मङ्गल के पास है। अतः हाथी, घोड़ा, गदहा, ऊँट, गाय आदि चतुष्पदादि को विभिन्न-रोग तथा मेघ के प्रतिकूलता के कारण भूसे वाले अन्न का नाश एवं सुख का अभाव होने की संभावना है।

**(५) दुर्गेशः शुक्रस्तत्फलम् -**

**नगरदेशविशेषपतिर्यदा भृगुसुतो बहुसौख्यकरो मतः ।**
**विनयवाणिजगेहसमः सुखो नगवने निकटेऽपि च दूरतः ।।**

इस वर्ष आकाशीय ग्रह-मन्त्रीमण्डल में शुक्र को दुर्ग अर्थात् रक्षा-विभाग मिला है। अतः इस वर्ष महानगर में रहने वाले लोगों को सुख प्राप्ति की संभावना है। वणिग्वर्ग तथा अन्य प्रजागण देश तथा विदेश, निकट तथा दूर में भी समान सुख को प्राप्त करेंगे।

**(६) धनेशश्चन्द्रस्तत्फलम् -**

**धनपतिर्मृगलाञ्छनको यदा रसचयात्क्रयविक्रयतो धनम् ।**
**वसनशालिसुगन्धरसं बहु द्रविणतैलघृतं नृपसौख्यदम् ।।**

इस वर्ष आकाशीय ग्रह मन्त्री-मण्डल में धनेश चन्द्र है। अतः इस वर्ष रसयुक्त पदार्थ, वस्त्र, धान तथा तैल इत्रादि सुगन्धितपदार्थ के क्रय-विक्रय से व्यवसायी वर्ग को धनाप्ति होगी। तेल तथा घृतादि पदार्थों का अच्छा उत्पादन होगा। प्रशासक-वर्ग सुखशान्ति को प्रदान करेंगे।

**(७) रसेशो गुरुस्तत्फलम् -**

**यदि गुरौ रसपे जनसौख्यदे कमलवन्ति सरासिं तृणानि च ।**
**जनपदा द्विजपूजन तत्परा गज सवाजिरथोष्ट्रयुताः नृपाः ।।**

इस वर्ष आकाशीय ग्रह मन्त्री-मण्डल में धान्येश गुरु है। अतः सरोवर तथा भूमि कमल से सुशोभित रहेगी। वेदपाठी ब्रह्मण यज्ञादि कार्य में संलग्न रहेंगे। राज्यधिकारी विविध वाहनादि ऐश्वर्य से सम्पन्न रहेंगे।

**(८) धान्येशः रविस्तत्फलम् -**

**पश्चाद्धान्याधिपे सूर्ये पश्चाद्धान्यं तदा नहि ।**
**विग्रहं भूभृतां धान्यं महर्घं ज्वरपीडनम्।।**

इस वर्ष आकाशीय ग्रह मन्त्री-मण्डल में धान्येश सूर्य है। अतः इस वर्ष देश में रवि की पैदावार कम मात्रा में होने की संभावना है। शासकवर्ग में परस्पर मतान्तर दिखेगा। फसल की कम पैदावार से उसके मूल्यों में आशातीत वृद्धि तथा प्रजावर्ग को ज्वरादि रोगों से परेशानी होने की संभावना है। अपि च -

**सूर्ये धान्याधिपे जाते अल्पतोयप्रदा घनाः।**
**माषर्मुतीलानाञ्च महर्घं जायते ध्रुवम्।।**

इस वर्ष धान्येश रवि है। अतः अल्पवृष्टि, अथवा खण्डवृष्टि, तथा उड़द, मूँग, तील आदि के मूल्यों में वृद्धि होने की संभावना है ।

**(९) नीरसेशो भौमस्तत्फलम् -**

**नीरसेशो यदा भौमः प्रवालरक्तवाससाम् ।**
**रक्तचन्दनताम्रणामर्घवृद्धिर्दिने दिने ।।**

इस वर्ष नीरसेश मङ्गल है। अतः इस वर्ष प्रवाल, रक्तवस्त्र, रक्त चन्दन, तथा ताम्रदि धातुयें महँगी होने की संभावना है ।

**(१०) फलेशो शुक्रस्तत्फलम् -**

**यदि फलस्य पतौ भृगुजे धरा मृदुकुमारमहीरुहराशयः।**
**बहुफला नरनाथसुभोगदा द्विजवराः श्रुतिपाठपरायणाः ।।**

इस वर्ष आकाशीय ग्रहों में फलोत्पादन का विभाग शुक्र को मिला है। अतः इस वर्ष फल की अच्छी पैदावार होगी। शासकवर्ग प्रजागण को अच्छी सुविधा उपलब्ध करायेंगे। श्रेष्ठद्विजगण वेदपाठ में निरत रहेंगे ।

## वर्षनाम आश्विनस्तत्फलम्-

अब्दे त्वाश्वयुजे त्वित्थं सुखिनः सर्वजन्तवः।
मध्यमं पूर्वशस्यं स्यात् परिपूर्णा विपच्यते।।

आश्विन नामक वर्ष के प्रभाव से प्रजावर्ग के साथ साथ सभी प्राणी सुखी होंगे। फसल की पैदावार सामान्य रहेगी।

**आवर्तमेघफलम्- आवर्ते छिन्न वृष्टिः स्यात् ।।**

आवर्त नामक मेघ के योगवश खण्ड वृष्टि का योग परिलक्षित होता है ।

**तटे रोहिणीवासफलम्- तटे वृष्टिः सुशोभना।।**

जिस वर्ष रोहिणी का निवास तट पर हो उस वर्ष सुवृष्टि का योग उपस्थित होता है ।

**रजकगृहे समयनिवासफलम्- रजके वृष्टिरुत्तमा।।**

जिस वर्ष समय का निवास रजक के घर में हो उस वर्ष उत्तम वृष्टि होती है ।

## सम्वत्सरानयनप्रकारः-

**शकेन्द्रकालः पृथगाकृतिघ्नः शशाङ्कनन्दाश्वियुगैः समेतः ।**
**शराद्रिवस्विन्दुहृतः स लब्धः षष्ट्याप्तशेषे प्रभवादयोऽब्दाः ।।२२।।**

अर्थात् शकाब्दः द्विस्थः स्थाप्यः । प्रथमस्थानीयः शकाब्दः आकृति (२२) घ्नः द्वाविंशत्यागुणितः, शशाङ्कनन्दाश्वियुगैः (४२९१) योजनीयः, समागते फले शराद्रिवस्विन्दु (१८७५) संख्यया विभाज्यते । तत्र लब्धिस्थानीया संख्या (वर्ष-मास-दिन-घटी-पलादिका) द्वितीयस्थाने स्थापिते शकाब्दे संयोज्य केवलं वर्षस्थानीया (प्रथमस्थानीयासंख्या) षष्ट्या (६०) विभाज्यते तदा शेषस्थानीयासंख्या वर्तमानसम्वत्सरं द्योतयति, तथा तस्य सम्वत्सरस्य अवसानं लब्धिस्थानीया संख्या द्योतयति । तद्यथोदाहरणम्-

शकाब्दः१९३४×२२+४२९१÷१८७५=२४/११/२३/५६/५,(लब्धि=वर्षमास-दिनघटीपलविपलात्मिका)। इयं लब्धि द्वितीयस्थाने स्थापिते शकाब्दे योज्यते तदा १९३४+२४/११/२३/५६/५ तदा १९५८/११/२३/५६/५, अत्र प्रथमस्थानीययोगफलं १९५८÷ ६०= अत्र शेषस्थानीयासंख्या ३८ वर्षारम्भस्य सम्वत्सरनाम क्रोधी इति द्योतयति। अस्य भुक्तमासादयः (लब्धयः)११/२३/५६/५सन्ति। एताः संख्या १२ राशौ विशोध्यते तदा ०/६/३/५५ क्रोधीसम्वत्सरस्य भोग्यमासादि आगता। अनेन मेषार्कदिनाङ्कात् अग्रे षष्ठे दिवसे अर्थात् २०/४/२०१२ दिनाङ्के ३/५५ घट्यादौ क्रोधी सम्वत्सरस्य अवसानन्तथा विश्वावसु-सम्वत्सरस्य प्रवेशो भविष्यति, परं वर्षपर्यन्तं संकल्पादौ क्रोधी-सम्वत्सरस्यैव प्रयोगः कर्तव्यः।

## शुभाशंसनम्

कालाद् बहोः बुधगणेक्षितकार्यपुण्यं पञ्चाङ्गलेखनमहोमरभाषया स्यात् ।
सम्पादयन् मदनमोहनपाठकस्तन् नाथेन युक् च भवतात् जगतां प्रसिद्धम् ।।

**डॉ. सुरेन्द्रपाठकः**

दि.4.2.2000 प्रवाचकः,व्याकरणविभागाध्यक्षः श्री स.के.सं.के.विद्यापीठम्,पुरी

## कुम्भमहापर्वविचारः-

### १. हरिद्वारे कुम्भनिर्णयः-

**चतुर्दशी मेषगतस्य भास्करे प्रवर्धपौष्ण्यादिनकृद्दिने यथा ।**
**सकुम्भयोगः सुरपूज्यकुम्भगे गङ्गाहरिद्वारसमागमे वा ।।**

अपि च - **कुम्भराशिगते जीवे तथा मेषगते रवौ। हरिद्वारे कृतं स्नानं पुनरावृत्तिवर्जनम्।।**

### २. प्रयागे कुम्भनिर्णयः-

मकरे च दिवानाथे वृषराशिस्थिते गुरौ ।
प्रयागे कुम्भयोगो वै माघमासे विधुक्षये ।।

अपि च-

माघे वृषगते जीवे मकरे चन्द्रभास्करौ ।
अमावस्यां तदा योगः कुम्भश्च तीर्थनायके ।।- (स्कन्दे)

### ३. गोदावर्य्यास्तटे नासिकक्षेत्रे कुम्भनिर्णयः-

कर्के गुरुस्तथा भानुश्चन्द्रश्चन्द्रक्षयस्तथा ।
गोदावर्य्यां तथा कुम्भो जायतेऽवनिमण्डले ।।

अपि च-

सिंहे गुरुस्तथा भानुश्चन्द्रश्चन्द्रक्षयस्तथा ।
गोदावर्य्यां तथा कुम्भो जायतेऽवनिमण्डले ।।

### ४. उज्जयिन्यां कुम्भयोगः-

सिंहे सौरी शशिः सूर्यो मेषे दामोदरे तथा ।
धरायाञ्च तदा कुम्भो जायते खलु भक्तिदः ।।

अपि च- मेषराशिगते सूर्ये सिंहराशौ बृहस्पतौ ।
उज्जयिन्यां भवेत्कुम्भः सदा मुक्तिप्रदायकः ।।

**एतेषु स्थलेषु कुम्भस्नानफलम्-**

गङ्गाद्वारे प्रयागे च धारा-(उज्जयिन्यां)गोदावरीतटे ।
कलशाख्यो हि योगोऽयं प्रोच्यते शङ्करादिभिः।
सहस्रं कार्तिके स्नानं माघे स्नानं शतानि च ।
वैशाखे नर्मदा कोटिः कुम्भस्नानेन तत्फलम् ।।

**स्नानकाले पठनीयो मन्त्रः-**

ॐ गङ्गे च यमुने चैव गोदावरी सरस्वती। नर्मदे सिन्धु कावेरी जलेस्मिन् सन्निधिं कुरु।।

अनेन जलमभिमन्त्र्य-

ॐ दुःखदारिद्र्यनाशाय श्रीविष्णोस्तोषणाय च। प्रातःस्नानं करोम्यद्य सर्वपापविमुक्तये।।

| पुं-स्त्री-नपुंसकानि नक्षत्राणि तथा सूर्यचन्द्रर्क्षाणि- | | | | |
|---|---|---|---|---|
| पुंनक्षत्राणि | स्त्रीनक्षत्राणि | नपुंनक्षत्राणि | सूर्यनक्षत्राणि | चन्द्रनक्षत्राणि |
| मू. पू.षा. उ.षा. श्रव. धनि. शत. पू.भा. उ.भा.रेव. अश्वि.भर.कृ. रो.मृ. | आ., पुन., पु. आश्ले., मघा, पू.फा.,उ.फा., ह.,चि.स्वा. | वि., अनु., ज्ये., | रोहि.,मृग.,पू.फा.,उ.फा., ह., चि., स्वा.,विशा., अनु., ज्ये., मू., शत., उ.भा. | अश्वि.,भर.,कृ.,आर्द्रा, पुन.,पु.,आश्ले., म., पू.षा., उ.षा.,श्रव., धनि., पू.भा. ,रेव. |

| ।। स्पष्टार्कबोधकं सप्तनाडीचक्रम् ।। | | | | | | | |
|---|---|---|---|---|---|---|---|
| **नाडी** | **चण्डा** | **समीरा** | **दहना** | **सौम्या** | **नीरा** | **जलम्** | **अमृतम्** |
| अधिपाः | शनिः | सूर्यः | भौमः | गुरुः | शुक्रः | बुधः | चन्द्रः |
| नक्षत्राणि | कृति., अनु., वि., भर. | रो.,ज्ये., स्वा.,अश्वि. | रे.,मृ., चि.,मू. | आ., उ.भा., ह., पू.षा. | पू.भा.,उ. फा., उ.षा., पुन. | पु.,पू.फा., अभि.,शत. | आश्ले.,म., श्रव.,धनि. |

## संक्रान्तिवाहनविचारः-

(ग्रन्थकर्ता-लक्ष्मीनारायणशर्मा हैदराबादस्थः)

सूर्यभाद्दिनभं यावत् संख्या तु गणयेत्सुधीः। नवभिर्भागमाहृत्य शेषाङ्कं वाहनं रवेः ।।
अश्वश्रृङ्गालमण्डूकाश्छागश्च शिखिमूषकौ। माहिषं रासभो हस्ती वृष्ट्यर्थे वाहनक्रमः।।
महिषशिखिमण्डूकगजेषु बहुलं जलम् । शेषन्तु मध्यमं ज्ञेयं नास्ति छागे च जम्बुके।।

## वृष्टिविचारः-

सूर्ये सूर्ये भवेद्वायुश्चन्द्रे चन्द्रे न वर्षति । सूर्य-चन्द्रसमायोगे तदा वर्षति मेघराट् ।
यदा स्यादमृता नाडी तथा च जलसंज्ञिका । जलप्रियो वाहनञ्च तदा वर्षति वारिदः ।।
स्त्री-स्त्री तु शीतलच्छाया पुं-पुं वारिविनाशकः। स्त्री-पुं योगः प्रभवति तदा वर्षति देवराट्।।
बुध-शुक्रमहीसूनुगुरवश्चैकनाडिगाः । निःसंशयं तदा काले जयते वृष्टिरुत्तमाः ।।

**(भविष्यफलभास्करे पृ.सं.150,**

| सौरमासानुसारं द्वादशराशिषु संक्रान्तिपुण्यकालव्यवस्था-(धर्मसिन्धौ) | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| राशयः | मे. | वृ. | मि. | क. | सिं. | क. | तु. | वृ. | ध. | म. | कु. | मी. |
| घट्यादि पुण्यकालः | प्राक्पूर्व १६-१६ | पूर्व-१६ | पर -१६ | पूर्व-३० | पूर्व-१६ | पर-१६ | प्राक्पूर्व १६-१६ | पूर्व-१६ | पर-१६ | पर-४० | पूर्व-१६ | पर -१६ |

## विवाहे पञ्चशलाकाचक्रम्




विवाहादिकर्म में पञ्चशलाका वेध तथा विवाहेतर समस्त कार्य में सप्तशलाका चक्र का विचार किया जाता है। जैसे भरणी नक्षत्रस्थ ग्रह अनुराधानक्षत्र को तथा अनुराधानक्षत्रस्थ ग्रह भरणीनक्षत्र को वेधित करता है ।

**सूक्ष्मता विचार-** जो भी ग्रह नक्षत्र के यदि प्रथम चरण पर हो तो विद्ध नक्षत्र के चतुर्थचरण को, द्वितीयचरण पर हो तो वेधितनक्षत्र के तृतीयचरण को, तृतीयचरण पर हो तो द्वितीयचरण को, चतुर्थचरण पर हो तो प्रथमचरण को विशेष विद्ध करेगा । यहाँ पर शुभग्रह से विद्ध नक्षत्र का चरण तथा पापग्रह से विद्ध सम्पूर्ण नक्षत्र का ही त्याग करना चाहिए । द्वयाधिक शुभग्रह तथा पापग्रह से वेधित नक्षत्र या राहु विद्ध नक्षत्र विवाह में त्याग देना चाहिए । तद्यथा-

**शुभाशुभग्रहैर्विद्धं भं विवाहे विवर्जयेत् ।**
**द्वयादिविद्धं महादुष्टं राहुविद्धं तथैव च** ।। नरपतिजयचर्या
**वधूप्रवेशने दाने वरणे पाणिपीडने ।**
**वेधः पञ्चशलाकाख्योऽन्यत्रसप्तशलाककः** ।। श्रीपतिः

## अक्षौहिणीसंख्याज्ञानम्.

अयुतं च नागास्त्रिगुणी रथानां लक्षैकयोद्धा दशलक्षवाजिनाम्।
पदातिसंख्या षट्-त्रिंशकोटयः अक्षौहिणीनां मुनयो वदन्ति ।।

# वर्षफलसारांशः- (संवत् २०८१)

वर्षारम्भ से ही गौरवसम्वत्सर के गणनानुसार कालयुक्त (५२) नामक सम्वत्सर है। अतः शुभाशुभकृत्यों के सङ्कल्पादि में **कालयुक्त** (५२) सम्वत्सर का ही प्रयोग होगा। २०८० सम्वत् का अवसान ८ मार्च २०२४ सोमवार को रात्रि ११/५४ बजे धनुलग्न, रेवती नक्षत्र तथा मीनराशिस्थ चन्द्र के सञ्चारावस्था में हुआ है। चैत्रशुक्लप्रतिपदा मङ्गलवार को होने से वर्षेश अर्थात् इस नूतन २०८१ संवत् (वर्ष) का राजा मङ्गल है।

मेषसंक्रान्ति १३ अप्रैल २०२४ तदनुसार चैत्रशुक्लपक्ष ५ तिथि शनिवार रात्रि २०/५९ बजे होने से नूतन वर्ष का मन्त्री शनि है। अतः इस वर्ष के राजा का दायित्व मङ्गल को तथा मन्त्री का दायित्व शनि को मिला है। अतः **भौमे नृपे वह्निभयं जनक्षयं चौराकुलं पार्थिवविग्रहञ्च। दुःखं प्रजाव्याधिवियोगपीडा स्वल्पं पयो मुञ्चति वारिवाहः** ।। इस वचन के अनुसार इस वर्ष अग्निकाण्ड की विभिषिकता से जनता सन्त्रस्त होगी। चोरों का आतङ्क, राज्याधिकारियों में परस्पर वैर तथा प्रजावर्ग में व्याधियों, तथा अनेक प्रकार के वियोगजन्य कष्टों की सम्भावना है। वृष्टि भी अच्छी नहीं होगी, कही अतिवृष्टि तो कहीं अनावृष्टि का योग है।

वर्षकुण्डली में वर्षलग्नाधिपति गुरु मित्ररशिस्थ होकर शत्रुग्रह बुध के साथ पञ्चमभावस्थ है। परिणामतः देश के उच्च शासनाधिकारी विभिन्न विरोधों के बावजूद भी अपने प्रज्ञाबल से राष्ट्राराधान करते रहेगे। विपक्षी दल अपने योजनाओं में सफल नहीं होंगे। देश मे गृहयुद्ध, प्राकृतिक प्रकोप, भ्रष्टाचार, महंगाई, लूट-मार, अग्निकाण्ड, तथा विभिन्न नूतन-रोग के प्रकोप से आम जनता संत्रस्त रहेगी। शासनाधिकारियों को विपक्षियों तथा वामपंथियों का कोपभाजन होना पड़ेगा। देश के विशिष्ट अधिकारियों को अपनी सुरक्षा का विशेष ध्यान रखना होगा। पञ्चमभाव में मित्रगृही गुरु की संयुति सप्तमेश-कर्मेश बुध के साथ है। देश में शैक्षिक एवं अनुसंधानात्मक कार्य प्रगति होगी। विश्व पटल पर भारत का सम्मान बढ़ेगा। तृतीयभावस्थ शनि से युक्त मंगल यान्त्रिक अन्वेषण की दिशा में प्रगति कराएगा। लाभेश चतुर्थभावस्थ शुक्र देश में बहुविध अर्थार्जन के मार्ग को प्रशस्त करेगा। प्रजावर्ग में आत्म-निर्भरता का भाव बढेगा। आतंकवादी, समाज को तोड़ने वाले एवं वामपंथी लोग अपने षडयन्त्रों में सफल नहीं होंगे। यह शुक्र भोगैश्वर्य पदार्थों की अभिवृद्धि में भी सहायक है। इसके साथ ही इलेक्ट्रोनिक वस्तुओं के निर्माण में अपना भारत कीर्तिमान स्थापित करेगा। समुद्र तटवर्ती क्षेत्रों मे रहने वालों को चक्रवातादि से विशेष नुकसान का योग परिलक्षित हो रहा है। चतुर्थस्थ चतुर्ग्रही योग के कारण गुप्तमार्ग से भारत-भूमि में प्रविष्ट विधर्मी भारतीय लोगों के अशान्ति, अराजकता आदि में कारण बनेंगे। जगत् कुण्डली में चतुर्थभावस्थ मङ्गल-शनि की संयुति से विदेश में भी जातीय दंगा आदि से प्रजा को कष्ट होगा। भारत भूमि भी इन विधर्मियों के षडयन्त्र का शिकार होगी। विधर्मी देश में यत्र-तत्र धार्मिक उन्माद फैलाने का असफल प्रयास करेंगे।

मेघेश शुक्र, सूर्य-चन्द्र-राहु से आक्रान्त है। अतः खण्डवृष्टि से अन्न-जन-धन की हानि होगी। दुर्गेश शुक्र देश की सीमा को सुरक्षित रखने का संकेत दे रहा है। दुर्गेश शुक्र वर्षकुण्डली एवं जगत्-कुण्डली में अनुकूल नहीं है। अतः देश को बाह्य एवं आभ्यन्तर रूप से सुरक्षित रखना चुनौती जैसा कार्य होगा। सस्येश मंगल शनि से संयुक्त है। अतः खाद्यान्न के संरक्षण उत्पादनादि में विभिन्न समस्यायें आयेंगीं। खरीफ( वर्षा ऋत्तु में उत्पन्न होने वाली फसलें) विशेष रूप से कुप्रभावित होंगी। फल-फूल-सब्जियों तथा रसयुक्त पदार्थों की पैदावार में न्यूनता होगी। शुक्र मेघ, दुर्ग एवं फल का स्वामी है। रसेश गुरु भी अनुकूल दशा में है। जिससे फल, दूध व अन्य रसयुक्त पदार्थों की पैदावार में वृद्धि का योग है। तेलहन व गन्ने जैसे रसयुक्त पदार्थों की अभिवृद्धि होगी। गोवंश की रक्षा हेतु सरकार को विशेष ध्यान रखना होगा।

वर्षकुण्डली में धर्मेश सूर्य, क्षीण चन्द्र राहु के साथ है। जिससे विधर्मीगणों के धार्मिक उन्माद के कारण प्रजा पीड़ित होगी। तथापि देश में आध्यात्मिक वातावरण बना रहेगा। **धर्मो रक्षति रक्षितः** के अनुसार विशिष्ट राज्याधिकारीगण अपने दायित्व का निर्वहण करेंगे। **भारतीय जनता पार्टी** स्वच्छ एवं अपने पारदर्शी सिद्धान्त के साथ आध्यात्मिक मुद्दे के कारण ही सत्ता में पुनः वापसी का सफल प्रयास करेगी। देश के शीर्षस्थ अधिकारियों की आध्यात्मिक चित्तवृत्तियों से जगत का कल्याण होगा। इस वर्ष नीरसेश तथा वर्षेश मङ्गल पापाक्रान्त है। अतः इस वर्ष प्रवाल, रक्तवस्त्र, रक्त चन्दन, तथा ताम्रदि धातुओं के साथ इलेक्ट्रिकल व इलेक्ट्रॉनिक वस्तुयें महँगी होंगी।

स्वदेशी इलेक्ट्रिक व इलेक्ट्रॉनिक सामान के उत्पादन से देश समृद्ध होगा। इन क्षेत्रों में नित्य नूतन अनुसन्धान से देश गौरवान्वित होगा। स्त्रीवर्ग सम्माननीय पदों पर अधिष्ठित होंगी। श्रृङ्गार-सङ्गीत-वाद्य-नृत्य के क्षेत्रों में विकास की पूर्ण सम्भावना है। यत्र-तत्र स्त्रियों को दुष्टों के कुचक्र का शिकार भी होना पड़ेगा। शुक्र, सूर्य क्षीणचन्द्र तथा राहु की संयुति है। परिणामतः स्त्रीवर्ग को अपनी सुरक्षा का विशेष ध्यान रखना होगा। राज्याधिकारियों को स्त्रीवर्ग की सुरक्षा हेतु ठोस नियम बनाना चाहिए। अन्वेषण के क्षेत्र में नये प्रयासों से देश के वैज्ञानिकों को विश्व में प्रतिष्ठा मिलेगी। नवागन्तुक रोगों तथा अग्निकाण्ड जैसी समस्याओं से प्रजावर्ग कुप्रभावित होगा। आकाशस्थ ग्रह मन्त्रीमण्डल के दश विभागों में से शुभग्रहों के पास ४ तथा पापफलदायी ग्रहों के पास ६ विभाग हैं। अतः विघटनकारी दुष्टात्मा अपने उद्देश्य में सफल नहीं हों इसके लिए राज्याधिकारियों को पूर्ण प्रयास करने होंगे। सत्ताधारी राजनेताओं के सूझ-बूझ पूर्वक अपने कार्यों का क्रियान्वयन करने से देश की अभ्युन्नति होगी। विशेष धर्मावबोध पूर्वक कर्त्तव्यनिष्ठा से ही देश तथा समाज का विकास हो सकता है। विशेष जगन्नियन्ता भगवान जगन्नाथ तथा भगवती वैष्णवी सभी का मङ्गल करें।

**।। हरिः ॐ ।।**

**वर्षादौ केतकीयायनांशाः**-२४/१०/४१

**ग्रहलाघवीयायनांशाः**- २५/०२/००

**वर्षलग्नम्** इ.का. ४५/३९
चैत्र कृष्ण ३० सोमवासरः दि. ८ अप्रैल २०२४

१० ८
मं. श. ११ ९ ७
१२ सू.चं.शु.रा. ६ के.
१ ३ ५
गु. बु. २ ४

**जगल्लग्नम्** इ.का. ३८/३२
चैत्रशुक्ल ५ शनिवासरः दि. १३ अप्रै. २०२४

९ ७
१० ८ के. ६
मं. श.
११ ५
सू. बु. शु. रा. १२ २ ४
गु. चं.
१ ३

| विन्ध्योत्तरवासिनां विंशोत्तरीयमतानुसारेणायव्ययचक्रम् | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| राशयः | मे. | वृ. | मि. | क. | सिं. | क. | तु. | बृ. | ध. | म. | कु. | मी. | योगः |
| आयः | २ | ११ | २ | ११ | १४ | २ | ११ | २ | १४ | ८ | ८ | १४ | ९९ |
| व्ययः | १४ | ५ | ५ | १४ | ११ | ५ | ५ | ११ | २ | ५ | ५ | २ | ८४ |

| विन्ध्यदक्षिणवासिनां अष्टोत्तरीयमतानुसारेणायव्ययचक्रम् | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| राशयः | मे. | वृ. | मि. | क. | सिं. | क. | तु. | बृ. | ध. | म. | कु. | मी. | योगः |
| आयः | ८ | २ | ५ | १४ | २ | ५ | २ | ८ | ११ | १४ | १४ | ११ | ९६ |
| व्ययः | १४ | ८ | ५ | २ | १४ | ५ | ८ | १४ | ५ | १४ | १४ | ५ | १०८ |



## ग्रहणविवरणम्

विक्रमाब्दः- २०८१, शकाब्दः-१९४६

२०८१ सम्वत्सरे पृथिव्यामस्यां केवलं ग्रहणचतुष्टयं भविष्यति। **तेषु** ग्रहणचतुष्टयेषु **सर्वमपि ग्रहणं भारते अदृश्यमेव भविष्यति**। अत्र वर्षेऽस्मिन् ग्रहण-चतुष्टयस्य विवरणं संक्षेपेण प्रस्तूयते।

| सं. | ग्रहणस्वरूपम् | मासः | दिवसः | दिनाङ्कः |
|---|---|---|---|---|
| (१) | खण्डग्रासचन्द्रग्रहणम् (भारते अदृश्यम्) | भाद्रशुक्ल १५ | बुधवासरे | १८ सित. २०२४ |
| (२) | कङ्कणसूर्यग्रहणम् (भारते अदृश्यम्) | आश्विनकृष्ण ३० | बुधवासरे | २/३ अक्तु. २०२४ |
| (३) | खग्रासचन्द्रग्रहणम् (भारते दृश्यम्) | आश्विनशुक्ल १५ | शुक्रवासरे | १४ मार्च २०२५ |
| (४) | खण्डग्राससूर्यग्रहणम् (भारते अदृश्यम्) | चैत्रकृष्ण ३० | शनिवासरे | २९ मार्च २०२५ |

**(१) खग्रासचन्द्रग्रहणम् (भारते अदृश्यम्):**- भाद्रशुक्ल १५ बुधवासरे तदनुसारं १८ सित. २०२४ दिनाङ्के प्रातः पूर्वाभाद्रपदानक्षत्रे चतुर्थे चरणे मीनराशिस्थिते चन्द्रे खग्रासचन्द्रग्रहणमिदं **भारताद्बहिः** भारतीयमानकसमयानुसारं प्रातः ०७/४३ A.M. तः आरभ्य ०८/४५ A.M. पर्यन्तं भविष्यति। अस्य ग्रहणस्य सूतकादिप्रभावः भारते नैव भविष्यति।

(२) **कङ्कणसूर्यग्रहणम् (भारते अदृश्यम्)**:- कङ्कणसूर्यग्रहणमिदं आश्विनकृष्ण अमायां बुधवासरे तदनुसारं २/३ अक्तू. २०२४ दिनाङ्के हस्तनक्षत्रे कन्याराशिस्थिते चन्द्रे, मध्यरात्रौ २१/१४ P.M. तः २७/१८ A.M. वादनपर्यन्तं भारताद्बहिः भविष्यति। अस्य ग्रहणस्य सूतकादिप्रभावः भारते नैव भविष्यति।

(३)**खग्रासचन्द्रग्रहणम्(भारते दृश्यम्)**:- फाल्गुनशुक्लपूर्णिमायां शुक्रवासरे तदनुसारं १४ मार्च २०२५ दिनाङ्के उत्तराफाल्गुनीनक्षत्रे सिंह-कन्याराशिस्थिते चन्द्रे खग्रासचन्द्रग्रहणं भारतीयमानकसमयानुसारं दिवा १०/४१ A.M. आरभ्य ०२/१८ P.M. वादनपर्यन्तं भारताद् बहिः दृश्यं भविष्यति। भारते अस्य ग्रहणस्य सूतकादिप्रभावः नैव भविष्यति।

(४)**खण्डग्राससूर्यग्रहणम् (भारते अदृश्यम्)**:- ग्रहणमिदं चैत्रकृष्ण अमायां शनिवासरे तदनुसारं २९ मार्च २०२५ दिनाङ्के दिवा २/२० P.M. तः ६/१५ P.M. या. उत्तराभाद्रपदानक्षत्रे मीनराशिस्थिते चन्द्रे भारताद्बहिः दृष्टिगोचरं भविष्यति। अतः अस्य ग्रहणस्य सूतकादिप्रभावः भारते नैव भविष्यति।

**ग्रहणस्य पर्वकालनिर्धारणम्**:-ग्रस्तोदयग्रहणस्य पर्वकालनिर्धारणं तद् बिम्बोदयकालादेव सञ्जायते। अर्थात् चन्द्रग्रहणे चन्द्रोदयकालात् तथा सूर्यग्रहणे सूर्योदयकालादेव पर्वकालारम्भः अवगन्तव्यः।

**ग्रहणे सूतकव्यवस्थाः** - यस्मिन् यामे चन्द्रग्रहणं तस्मात् पूर्वं (९ घण्टा ) प्रहरत्रयं न भुञ्जीत। सूर्यग्रहणे तु (१२ घण्टा) प्रहरचतुष्टये पूर्वं न भुञ्जीत ।

- द्रष्टव्यं- निर्णयसिन्धोः प्रथमपरिच्छेदः पृष्ठ संख्या ९७।

**ग्रहणे निषिद्धकर्माणि** - ग्रहणकाले शयने कृते रोगो, मूत्रे दारिद्र्यं, पुरीषे कृमिः, मैथुने ग्रामसूकरोऽभ्यङ्गे कुष्ठी, भोजने नरकमिति -धर्मसिन्धुः। तद्यथा-

**भूकम्पे ग्रहणे यो हि करोति खननं भुवः। जन्मान्तरे महापापो ह्यङ्गहीनो भवेद् ध्रुवम् ।।**

माधवीये वृद्धगौतमः - **सूर्यग्रहे तु नाश्नीयात् पूर्वं यामचतुष्टयम् ।**

**चन्द्रग्रहे तु यामांस्त्रीन् बालवृद्धातुरैर्विना ।।**

अर्थात् सूर्यग्रहणात् पूर्वं यामचतुष्टयमर्थात् १२ घण्टात्मकः कालस्तथा चन्द्रग्रहणात् ९ घण्टा पूर्वं सूतककालः स्वीकृतो विद्यते। एतावता अस्मिन् कालाभ्यन्तरे बालवृद्धातुरैर्विना भोजनादिकं निषिद्धमिति। अपि च- ग्रहणदिवसे अहोरात्रमुपवासं कुर्यादिति वचनमपि प्राप्यते। तद्यथा- **अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः ।**

**अहोरात्रोषितः स्नातः सर्वपापैः विमुच्यते।।**

**आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्र-सूर्ययोः। पारणमुपवासञ्च न कुर्यात्पुत्रवान् गृही ।।**

एवञ्च- **सूर्येन्दुग्रहणं यावत् तावत् कुर्याज्जपादिकम् ।।**

## स्नानादिकालव्यवस्था -

**ग्रस्यमाने भवेत् स्नानं ग्रस्ते होमो विधीयते । मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयते।।**

**सूर्यग्रहणकाले दान-स्नान-ब्राह्मणादीनां वैशिष्ट्यम्-**

**सर्वं भूमिसमं दानं सर्वे ब्रह्मसमाद्विजाः । सर्वं गङ्गासमं तोयं राहुग्रस्ते दिवाकरे ।।**

## ग्रहणफलनिर्द्धारणसिद्धान्तः-

**जन्मर्क्षे निधनं ग्रहे जनिभतो घातः क्षतिः श्रीर्व्यथा**

**चिन्ता सौख्यकलत्रदौस्थ्यमृतयः स्युर्माननाशं सुखम् ।**

**लाभोपाय इति क्रमात्तदशुभध्वस्ते जपः स्वर्णगो-**

**दानं शान्तिरथो ग्रहं त्वशुभदं नो वीक्ष्यमाहुः परे ।।** मुहूर्तचिन्तामणिः- गो. प्र. ६

सूर्यचन्द्रग्रहणयोरनिष्टनिवृत्तये अनुष्ठानदानशान्त्यादयः लिख्यते-

**सुवर्णनिर्मितं नागं सतिलं ताम्रभाजनम्। सदक्षिणं सवस्त्रञ्च श्रोत्रियाय निवेदयेत्।।**

**सौवर्णं राजतं वापि बिम्बं कृत्वा स्वशक्तितः। उपरागोद्भवक्लेशच्छिदे विप्राय कल्पयेत्।।**

दानमन्त्रः- **तमोमय! महाभीम सोमसूर्यविमर्दन। हेमनागप्रदानेन मम शान्तिप्रदो भव।।**

**।। हरिः ॐ ।।**

## ।। विगत सम्वत् २०८० के श्रीजगन्नाथपञ्चाङ्ग में की गई सत्य भविष्यवाणियाँ।।

**१. <u>वर्षकुण्डली में वर्षलग्नाधिपति मंगल शत्रुराशिस्थ होकर अष्टमस्थ है। परिणामतः देश के उच्चपदासीन शासनाधिकारियों को अपनी सत्ता बनाये रखने के लिए काफी कठिनाईयों का सामना करना पडेगा-</u>** कर्नाटक राज्य के विधान सभा चुनाव से ठीक पहले भाजपा दल के कई नेताओं ने अपने सहयोगीयों के साथ अपनी सत्ता को बनाये रखने के लिए अपने दल को छोड़ कर कांग्रेस दल की सदस्यता अपना ली। इन नेताओं में कर्नाटक के पूर्व मुख्यमन्त्री भी शामिल थे। इसके अतिरिक्त बिहार में भी सत्तादल के मुखिया एवं राज्य के मुख्यमन्त्री को अपनी सत्ता बचाने के लिए अपने पुराने गठबन्धन को छोड़ कर भाजपा के साथ गठबन्धन करना पडा।

**२. <u>किसी विशिष्ट शासनाधिकारी की मृत्यु/मृत्यु तुल्य कष्ट अथवा अन्यान्य स्वास्थ्यगत समस्याओं से जूझना पडेगा-</u>** शिरोमणि अकाली दल के प्रमुख नेता एवं पंजाब राज्य के पांच बार चुने गए मुख्यमन्त्री प्रकाश सिंह बादल की मृत्यु 25 अप्रैल 2023 को हुई। यह पंजाब में चुने गए विधायकों में अभी तक के सबसे युवा विधायक रहे थे।

**३. <u>देश में शैक्षिक प्रगति एवं अनुसन्धानात्मक कार्य उभर कर आयेंगे। विश्व पटल पर भारत का सम्मान बढेगा -</u>** विगत वर्ष भारतीय अन्तरिक्ष अनुसन्धान संगठन के मिशन चन्द्रयान की सफलता ने सम्पूर्ण विश्व में भारत की प्रतिष्ठा को बढ़ाया। इस प्रकार विश्व में भारत एक मात्र ऐसा देश बना जिसने चन्द्रमा के दक्षिणी ध्रुव पर जाने में सफलता प्राप्त की। इसके अतिरिक्त आदित्य L1 मिशन एवं XPOSAT का भी सफल प्रक्षेपण किया गया।

**४. <u>समुद्र तटवर्ती क्षेत्रों में रहने वालों को चक्रवातादि से विशेष नुकसान होगा</u>**। विगत वर्ष बिपरजोय नामक चक्रवात( 167 कि.मी. प्रति घंटा की गति ) गुजरात के तटों से टकराया। इस दौरान भारी वर्षा एवं तेज हवाओं से तटीय क्षेत्रों को काफी नुकसान हुआ।

**५. <u>समुद्री यान पर दुर्घटना सम्भावित है-</u>** विगत वर्ष 7 अक्तू. 2023 को इजरायल एवं आतंकी समूह हमास के मध्य युद्ध होने के कारण लाल सागर के समुद्री मार्ग के माध्यम से भारत एवं पूर्व के देशों में व्यापार करने आने वाले व्यापारिक समुद्री यानों पर हौथी आतंकी समूह द्वारा लगातार हमले किये जा रहे हैं। इन हमलों में भारत के व्यापारिक समुद्री यानों को भी निशाना बनाया गया।

**६. <u>देश के विशिष्ट अधिकारीयों को अपनी सुरक्षा का विशेष ध्यान रखना होगा-</u>** भारतीय लोकतन्त्र के मंदिर कहे जाने वाले संसद पर हुए 2001 के आंतकी हमले की 22वीं वर्षगांठ पर 2 व्यक्तियों द्वारा लोक सभा के भीतर नारेबाजी करते हुए गैस के कनस्तर फैंके गए। यह घटना लोकसभा में सत्र चलने के दौरान घटित हुई। इस घटना को सुरक्षा में भारी चूक के रूप में देखा गया।

इस प्रकार श्रीजगन्नाथपञ्चाङ्ग की भविष्यवाणियाँ सर्वथा सत्य होती रही हैं।

## रोगे त्रिनाडीविचारः-

| नाडी | नक्षत्राणि | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| आदि | आर्द्रा | पू.फा. | उ.फा. | अनु. | ज्ये. | धनि. | शत. | भर. | कृ. |
| मध्य | पुन. | मघा | ह. | विशा. | मू. | श्रव. | पू.भा. | अश्वि. | रोहि. |
| अन्त्य | पुष्य | आश्ले | चि. | स्वा. | पू.षा. | उ.षा. | उ.भा. | रेव. | मृग. |

जन्मनक्षत्रं नामनक्षत्रं सूर्यनक्षत्रं दिननक्षत्रञ्चेति एतानि सर्वाण्यपि एकनाडौ यदा भवन्ति तदा असाध्यरोगिणः नूनमेव मृत्युः भवतीति ज्ञातव्यम्। अस्य त्रिनाडीचक्रस्य विचारः यात्रायां रणक्षेत्रे प्रस्थानकालेऽपि कर्तव्यः ।

## दन्तजननफलबोधकचक्रम्-

| मासः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| फलानि | स्वयं नाशः | अनुजनाशः | भगिनीनाशः | मातृनाशः | अग्रजनाशः | भोगाप्तिः | पितृसुखाप्तिः | शारीरिकपुष्टिः | धनाप्तिः | सुखाप्तिः | सुखाप्तिः | सदन्तजनने स्वनाशः |

**अथ राहु(काल)वासविचारः**

सौरमासक्रमेण मार्गशीर्ष-पौष-माघमासेषु पूर्वस्यां दिशि, फाल्गुन-चैत्र-वैशाखेषु दक्षिणस्यां, ज्येष्ठ-आषाढ़-श्रावणमासेषु पश्चिमस्याम्, भाद्र-आश्विन-कार्तिक-मासेषूत्तरस्यां दिशि राहोः(कालस्य) स्थितिः ज्ञातव्या ।

**मासिककालविचारः-**

**यद्राशिगेऽर्के खलुतद्दिशि स्याद्राहुः सदा तिष्ठति मासि मासे ।**
**द्विरागमे वापि गृहप्रवेशे राहुः प्रशस्तः किल वामपृष्ठे ।।**

अत्रेदं ध्यातव्यं यदयं त्रैमासिकराहोः (कालस्य) विचारः भवन-तडागादिनिर्माणकर्मणि करणीयः। द्विरागमनादिषु मासिककालस्य विचारः एव विधेयः। तद्यथा-

**त्रैमासिकं तडागादौ मासिकं द्वयङ्गकर्मणीति।।**

**अथ पञ्चकविचारः-** धनिष्ठा, शतभिषा, पू.भा., उ.भा., रेवती, एतानि पञ्चकनक्षत्राणि सन्ति। एषु नक्षत्रेषु दक्षिणदिग्यात्रा, गृहच्छादनं, प्रेतदाहः, तृणकाष्ठादिसंग्रहः, शय्यावितानादिकं निषिद्धं वर्तते। **अत्रापवादः-**

**वस्वादौ शतभिषग्मध्ये पूर्वादौ चोत्तरान्तके।**
**पञ्च-पञ्च घटी त्याज्या रेवतीं सकलां त्यजेत्।।**

## ग्रहाणां शुष्काशुष्कतत्त्व स्वरूपादिबोधकचक्रम्-

| ग्रहाः | तत्त्वं | पञ्चभूत सम्बन्धः | स्वरूपम् |
|---|---|---|---|
| सूर्यः | शुष्कः | अग्निः | मध्यमः |
| चन्द्रः | जलसंज्ञकः | जलम् | दीर्घः |
| मङ्गलः | शुष्कः | अग्निः | ह्रस्वः |
| बुधः | जलसंज्ञकः | पृथ्वी | मध्यमः |
| गुरुः | जलसंज्ञकः | आकाश/ तेजः | मध्यम/ ह्रस्वः |
| शुक्रः | जलसंज्ञकः | जलम् | ह्रस्वः |
| शनिः | शुष्कः | वायुः | दीर्घः |
| राहुः | शुष्कः | वायुः | दीर्घः |
| केतुः | शुष्कः | वायुः | मध्यमः |

## भद्रावासविचारः-

| राशयः | भद्रावासः | फलम् |
|---|---|---|
| कर्कसिंह-कुम्भमीनेषु | मृत्युलोके | अशुभम् |
| मेषवृषमिथुन-वृश्चिकेषु | स्वर्गे | शुभम् |
| कन्यातुला-धनुमकरेषु | पाताले | धनागमः |

## चन्द्रवासविचारः-

| राशयः | चन्द्रवासः |
|---|---|
| मेष-सिंह -धनुषु | पूर्वस्याम् |
| वृष-कन्या-मकरेषु | दक्षिणे |
| मिथुन-तुला-कुम्भेषु | पश्चिमे |
| कर्क-वृश्चिक-मीनेषु | उत्तरस्याम् |

## सिद्धादियोगचक्रम् (तिथिदिननक्षत्रादिवशेन)

| दिनानि | रवि | चन्द्रः | कुज | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|---|
| सिद्धियोग | ३-८-१३ | १-६-११ | ३-८-१३ | २-७-१२ | ५-१०-१५ | १-६-११ | ४-९-१४ |
| अमृतयोगः | ५-१०-१५ | ५-१०-१५ | २-७-१२ | १-६-११ | ३-८-१३ | ४-९-१४ | १-६-११ |
| मृत्युयोगः | १-६-११ | २-७-१२ | १-६-११ | ३-८-१३ | ४-९-१४ | २-७-१२ | ५-१०-१५ |
| सर्वार्थ-सिद्धियोगः- | अश्वि.ह.पु. उत्तरा.३,मू. | रो.मृ.पुष्य अनु. श्रव. | अश्वि.कृ. अश्ले.उ.भा | कृ.रो. मृ. ह. अनु. | अश्वि.पुन. पुष्य. अनु.रे. | अश्वि. पुन. अनु.श्र.रे | रो.स्वा. श्रव. |

**शास्त्राणां महात्म्यम्-**

**सद्यः फलति गान्धर्वं मासमेकं पुराणकम् ।**
**वेदाः फलन्ति कालेषु ज्योतिर्वैद्यो निरन्तरम् ।।**

## प्रसूतिलग्नविचार

जन्मकाल लग्नसन्धि अथवा लग्नान्त बिन्दु पर होने से लग्न निश्चय करने में समस्या होती है। अतः ज्योतिषशास्त्र में जन्मसमय की तात्कालिक स्थिति को देख कर लग्न को निश्चित करने की विधि बताई गयी है। मेषादि लग्नों के उदयक्षितिज में होने से जातक के जन्मकाल में निम्नलिखित स्थिति की सम्भावना व्यक्त की गयी है। यथा-

**मेषलग्न-** जातक के जन्मकाल में मेषलग्न हो तो प्रसूतिका की शय्या घर के पूर्व भाग में होवे, उपसूतिकायें दो होवें, जातक के मुख की कान्ति लाल वर्ण की हो, जातक पित्तप्रकृति, चंचल तथा साहसी होवे। माता का मस्तक पूर्व की ओर, वस्त्र लाल-वर्ण का तथा जन्म के पूर्व जातक की माता ने मीठा भोजन किया हो। प्रसूतिका-भवन पुराना हो। आयु के २-४-११-१६-२९ वर्ष विशेष कष्ट कारक होवे।

**वृषलग्न-** जातक के जन्मकाल में वृषलग्न हो तो जातक गौर-वर्ण का, सुरूपवान्, रक्त-पित्त प्रकृति वाला, जन्म के समय प्रसूतिका का मस्तक पूर्व दिशा में अथवा प्रसूतिभवन का मुख पूर्व दिशा में रहे। पृष्ठोदय लग्न होने के कारण जातक के जन्म में पहले पाँव का प्राकट्य हो। माता का वस्त्र सफेद एवं आभूषण चाँदी के हों। जन्म के समय तीन या चार उपसूतिकायें हों। जीवन के १-१३-१८-३३-४३-५८वाँ वर्ष विशेष कष्टकारी होवे।

**मिथुनलग्न-** जातक के जन्मकाल में मिथुनलग्न हो तो जातक वात-श्लेष्म प्रकृति का, स्वभाव चंचल, उपसूतिकायें तीन या पांच, माता का मुख या प्रसूतिभवन का मुख पश्चिम दिशा की ओर रहे। माता के स्तन में दूध कम रहे, माता ने प्रसव से पूर्व नमकीन/मिश्रित भोजन किया हो, वस्त्र हरा व पुराना हो। मिथुनराशि शीर्षोदय होने से पहले शिर का प्राकट्य हो। जन्म के समय जातक दीर्घ स्वर से क्रन्दन करे। आयु के २-४-१०-१३-३८-४८वाँ वर्ष कष्टकारक रहे।

**कर्कलग्न-** जातक के जन्मकाल में कर्कलग्न हो तो जातक का गौर-वर्ण, कोमल एवं हृष्ट-पुष्ट शरीर वाला, चंचल नेत्र, वात-श्लेष्म प्रकृति वाला, कद लम्बा व गोल, सुन्दर मुखमण्डल वाला होवे। प्रसव से पूर्व माता ने मीठा व शीतल भोजन किया हो। प्रसव के समय माता का मस्तक उत्तर दिशा में रहे। माता का वस्त्र पुरातन, वर्ण श्वेत व गुलाबी हो। माता के शरीर के दाहिने भाग पर लहसन का चिह्न हो। माता चाँदी का आभूषण धारण की हो। जातक प्रसव के कुछ अनन्तर रोया हो। जातक बाल्यकाल से ही तरल-पदार्थ का आग्रही हो। जन्म से १-५-२५-३९-४८-६२ वाँ वर्ष नेष्ट फलदायक हो।

**सिंहलग्न-** जातक के जन्मकाल में सिंहलग्न हो तो जातक के पीठ पर चिह्न या लहसन हो। जन्म के समय माता का मस्तक पूर्व की ओर लेकिन प्रसूतिगृह उस वास्तु के दक्षिण दिशा में अथवा प्रसूतिगृह दक्षिणमुख का हो। माता का वस्त्र रक्त वर्ण का तथा माँ स्वर्णाभूषण धारण की हो। प्रसव के पूर्व माता ने खट्टा व कषैला भोजन किया हो। जन्म के समय उपसूतिकाओं की संख्या तीन या पांच रहे। सूतिकागृह नूतन हो। जन्म के समय जातक दीर्घ स्वर से रोया हो। आयु के ३-५-१२-२८-३६-४९ वाँ वर्ष अति कष्टकारी होवे।

**कन्यालग्न-** जातक के जन्मकाल में कन्यालग्न हो तो जातक का नेत्र सुन्दर, गौरवर्ण, अल्प केश, गोल चेहरा, सौम्य पाँव, चंचल-वृत्ति तथा कण्ठ व जंघा में चिन्ह होवे। जन्म के समय माता का मस्तक दक्षिण की तरफ, उपसूतिकाओं की संख्या चार या पांच, जन्मसमय में पिता अनुपस्थित, माता लाल व प्राचीन वस्त्र धारण की हों, माता ने कषैला-रस युक्त भोजन की हो। जन्म के समय बालक अल्प रुदन करे। जीवन के २-४-१५-२३-२५-३५-४५-५६वाँ वर्ष अरिष्ट कारक होवे।

**तुलालग्न-** जातक के जन्मकाल में तुलालग्न हो तो जातक का चेहरा लम्बा, गौर वर्ण, काले नेत्र, बड़ी नाक, दुबला पतला शरीर वाला, चंचल, तीक्ष्ण बुद्धि युक्त तथा जातक के सिर में कम बाल होवे। जन्म के समय में माता ने पुराना वस्त्र धारण किया हो। जातक के जन्म से पूर्व माता ने कषाय-रस-युक्त भोजन किया हो। जन्म के समय जातक दीर्घ शब्द से रोये। आयु के ३-६-८-१५-२७-३१वें वर्ष विशेष अरिष्टकारक होवे।

**वृश्चिकलग्न-** जातक के जन्मकाल में वृश्चिकलग्न हो तो जातक का मस्तक ऊँचा, पुष्ट शरीर, ताम्र-वर्ण, भूरे नेत्र, शीर्षोदय अर्थात् जन्म के समय पहले सिर का प्राकट्य हो। जातक का स्वभाव तेज, जन्म के समय उपसूतिकाओं की संख्या दो या तीन, सूतिकागृह का द्वार उत्तर की ओर, जातक के पीठ पर चिन्ह, तथा

माता का वस्त्र लाल होवे। जन्म के समय जातक देर से रोये। जन्म के २-६-११-२७-५८वाँ वर्ष विशेष कष्टकारी होवे।

**धनुलग्न-** जातक के जन्मकाल में धनुलग्न हो तो जातक का मस्तक ऊँचा, नेत्र विशाल, गौर वर्ण तथा जन्म के समय माता का मस्तक पूर्व अथवा उत्तर दिशा की तरफ होवे। जातक की माता के वस्त्र पीले वर्ण का तथा चित्रित होवे। जन्म समय में उपसूतिकाओं की संख्या एक अथवा पांच हो। जन्म के समय जातक दीर्घ शब्द से रोया हो। जातक के छाती पर लहसन अथवा तिल आदि के चिन्ह हो। जीवन के १-३-१०-१८-२१-३७-४२वाँ वर्ष विशेष नेष्ट होवे।

**मकरलग्न-** जातक के जन्मकाल में मकरलग्न रहे तो जातक का पिंगल वर्ण, कृश शरीर, बहुत केश वाला, ऊँचा मस्तक, विशेष रूप से ऊँची नाक वाला होवे। जातक की वात प्रकृति होवे। जन्म के पूर्व माता ने कषैला एवं शीतल भोजन किया हो। उपसूतिकाओं की संख्या तीन या चार हो। सूतिकागृह प्राचीन तथा गृह का मुख उत्तर की तरफ हो। जन्म के समय जातक अल्प रोया हो। आयु के ३-५-१३-२७-३३-५७वाँ वर्ष अत्यन्त कष्टकारक रहे।

**कुम्भलग्न-** जातक के जन्मकाल में कुम्भलग्न रहे तो जातक का मस्तक चौड़ा, वर्ण श्वेत-श्याम मिश्रित, मध्यम बालों वाला, मोटे ओष्ठ तथा वात-पित्त प्रकृति होवे। माता का मस्तक पश्चिम की ओर तथा उपसूतिकाओं की संख्या तीन या पांच रहे। जन्म के समय पिता अनुपस्थित एवं माता को अत्यन्त शारीरिक कष्ट रहे। जन्म के पूर्व माता ने शाकादि भोजन किया हो। जन्म के समय जातक अल्प रोवे। जीवन के २-४-१३-२८-३३-४२-४८ तथा ५४ वाँ वर्ष कष्टकारक होवे।

**मीनलग्न-** जातक के जन्मकाल में कुम्भलग्न रहे तो जातक का मुख सौम्य, वर्ण पिंगल तथा प्रकृति त्रिदोषात्मिका( वात-पित्त-कफयुक्ता ) होती है। जातक की माता पीले वर्ण अथवा मिश्रित वर्ण के वस्त्र का परिधान किये हो। प्रसव से पूर्व जातक की माता मीठा तथा अल्प भोजन किये हो। जन्म के समय जातक के माता का सिर उत्तर दिशा में हो। जन्म के समय उपसूतिका की संख्या दो या तीन हो। जन्म के कुछ कालानन्तर जातक रोये। आयु के १-७-१०-१३-१६-२६-२९-३८ तथा ४१ वाँ वर्ष विशेष रूप से कष्टकारी होवे। ।। इति दिक् ।।

# विवाह विलम्ब के विभिन्न कारण एवं निवारण

**प्रो.मदनमोहनपाठक**
वरिष्ठाचार्य, ज्योतिषविभाग
केन्द्रीयसंस्कृतविश्वविद्यालय
लखनऊ-परिसर

भारतीयसंस्कृति में संस्कारों का सर्वाधिक महत्त्वपूर्ण स्थान है। व्यासस्मृति के अनुसार षोडशसंस्कार[1] कहे गए हैं। इन षोडशसंस्कारों में विवाह संस्कार सभी संस्कारों में महनीय है। सुखमय दाम्पत्य जीवन अथवा गृहस्थाश्रम की यात्रा के निर्विघ्न परिसमाप्ति के लिये शास्त्रीय विधि के अनुसार जैसे कुण्डली मिलान आदि के द्वारा वरकन्या के परस्पर प्रकृति तथा व्यक्तित्व का मिलान करना चाहिए। **विवाह** शब्द वि उपसर्ग पूर्वक वह् धातु से निर्मित है। जिसका अर्थ होता है किसी व्यक्ति विशेष को किसी वस्तु विशेष की प्राप्ति। क्योंकि वह् धातु प्राप्ति करने अथवा ढोने अर्थ में प्रयुक्त होता है। यहां पर वर विशेष को किसी कन्या विशेष की प्राप्ति अथवा कन्या विशेष को किसी वर विशेष की प्राप्ति को विवाह कहा गया है। वर्तमान समय के गृहस्थाश्रम में वर-बधू रेल लाइन की तरह हैं जो समान दिशा में बिछे होने के बावजूद भी कभी मिलते नहीं। अर्थात विचार की एकरूपता नहीं रहती है। लेकिन दोनों का उद्देश्य समान होता है। प्राचीनकाल में स्थिति कुछ भिन्न थी। पुराणों के अनुसार सूर्य की पत्नी छाया आज भी उनका अनुगमन करती है। राजा दिलीप तथा उनकी पत्नी सुदक्षिणा के परस्पर समर्पण के कारण ही उनके घर में रघु उत्पन्न हुए। जिनके नाम पर रघुकुल आज भी विश्रुत है। आज दम्पति के परस्पर समर्पण के अभाव के कारण ही घर में राम या कृष्ण का नहीं अपितु रावण, कंस, दुर्योधन व दुःशासन जैसे पुत्र तथा गार्गी मैत्रेयी नहीं अपितु सूर्पनखा जैसी पुत्री का प्राकट्य हो रहा है। यह आने वाली पीढियों के लिए चिन्ता की बात है। समय रहते यदि यह पीढ़ी सचेत नहीं हुई, स्वेच्छाचारिता पर अंकुश नहीं लगा तो इसके परिणाम अत्यन्त भयावह होंगे।

सुखमय दाम्पत्य जीवन के लिए केवल जन्मपत्र का मिलाना ही नहीं अपितु दोनों के कुल-शील-वय-रूप-विद्या-वित्त-सनातनता आदि में साम्यता

1. गर्भाधानं पुंसवन सीमन्तो जातकर्म च । नामक्रिया निष्क्रमणेऽन्नाशनं वपनक्रिया ।।
कर्णवेधो व्रतादेशो वेदारम्भक्रियाविधिः । केशान्तः स्नानमुद्वाहो विवाहाग्निः परिग्रहः ।।
त्रेताग्निसंग्रहश्चेति संस्काराः षोडश स्मृताः।। व्यासस्मृतिः-१/१३-१५

अवश्य विचार कर लेनी चाहिए। क्योंकि विवाह हेतु इन सात बिन्दुओं पर विशेष रूप से विचार करने की बात कही गई है। तद्यथा-

**कुलं हि शीलञ्च वयञ्च रूपं विद्या च वित्तञ्च सनाथताञ्च।**
**एतान् गुणान् सप्त परीक्ष्य देया कन्या बुधैः शेषमचिन्तनीयम्।।**

यद्यपि यह सर्वथा सत्य है कि पति के लिए पत्नी का स्थान तथा पत्नी के लिए पति (सप्तम)स्थान मारक[2] कहा गया है। एतदर्थ ज्योतिषशास्त्र में जितना अन्वेषण सुखमय दाम्पत्य-जीवन के लिए किया गया है उतना विचार अन्य किसी विषय के लिए नहीं किया गया है। तथापि वर्त्तमान समय में स्वेच्छाचारिता के साथ दाम्पत्यजीवन में प्रवेश करने के कारण दाम्पत्यजीवन में अशान्ति कलह के परिणामस्वरूप समाज सर्वत्र आधि-व्याधि से आक्रान्त है। यहाँ पर यह बात ध्यान देने योग्य है कि मानसिक रोग हेतु आधि तथा शारीरिक रोग हेतु व्याधि शब्द का प्रयोग किया जाता है।

**विवाह विलम्ब के महनीय कारण :-**

१. ज्योतिषशस्त्रीय ग्रहयोगों की प्रतिकूलता
२. मिथ्याचार
३. ब्रह्मचर्याश्रम में सम्बन्धित नियमों का पालन न करना
४. अनुद्योगिता

**१. ज्योतिषशास्त्रीय ग्रहयोगों की प्रतिकूलता-**

यहाँ पर जातक शास्त्र के अनुभव सिद्ध योगों का सार उपस्थित किया जा रहा है। निम्नलिखित ये योग जन्मपत्र में दिखें तो आवश्य ही सावधान हो जाना चाहिए।

१. लग्नेश तथा शुक्र अष्टमेश के साथ अष्टम भाव में हों तो आजकल ३० वर्ष के बाद ही विवाह होता देखा गया है।
२. सप्तम भाव में अकेला गुरु व शनि विवाह में विघ्न व बिलम्ब करता ही है।
३. तृतीय भाव में शुक्र तथा नवम में सप्तमेश हो तो विवाह में बिलम्ब होता है।
४. सप्तमस्थ केतु विवाह में विघ्न उपस्थित करता है। सप्तमेश क्रूराक्रान्त हो तो विवाह में विघ्न के साथ दाम्पत्य जीवन दुःखमय होता है।
५. लग्न, सप्तमेश तथा शुक्र से शनि पञ्चम, सप्तम अथवा दशम में हो तो विवाह में विघ्न या विलम्ब होता है।
६. कन्या के जन्मपत्र में गुरु का नीच होना, पुरुष के जन्मकुण्डली में शुक्र का नीच या पापाक्रान्त होना विवाह में विलम्ब, दाम्पत्य सुख में बाधा करता है।
७. मांगलिक योग (जैसे लग्न से प्रथम, चतुर्थ, सप्तम, अष्टम, द्वादश में मंगल) हो तो विवाह में विलम्ब एवं दाम्पत्य सुख में बाधा उत्पन्न करता है।
८. वर के कुण्डली में त्रिकस्थ (६-८-१२) शुक्र तथा कन्या के कुण्डली में त्रिकस्थ (६-८-१२) गुरु विवाह में विलम्ब करता है।
९. सप्तम भाव के द्रष्टा पापी ग्रह की दशा विवाह समय में उपस्थित हो तो विवाह में विलम्ब होता है।

२. **मिथ्याचारः-** विवाह विलम्ब के अन्यान्य कारणों में से मिथ्याचार भी एक महनीय कारण है। मिथ्याचार एक ऐसी क्रिया है जिसमें व्यक्ति अपनी समस्त कर्मेन्द्रिय को संयमित करके उस कर्मेन्द्रिय से सम्पन्न किए जाने वाले समस्त कार्य मानसिक रूप से करता है। लोक में उस व्यक्ति के द्वारा सम्पादित इस छद्मक्रिया का ज्ञान न हो ऐसा प्रदर्शन भी करता है। इसे मिथ्याचार कहते हैं। भगवान श्रीकृष्ण ने इस विषय में कहा है-

**कर्मेन्द्रियाणि संयम्य यः आस्ते मनसा स्मरन्।**
**इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते।।**

श्रीमद्भगवद्गीता-३/६

इस प्रकार भोगासक्त मिथ्याचारी लड़के एवं लड़कियों के विवाह में विघ्न/विलम्ब तथा दाम्पत्य सुख में बाधा उपस्थित होती है।

जन्मपत्र में दाम्पत्यसुखदायक ग्रह यदि निर्बल हों तो मानसिक रूप से ही दाम्पत्यसुख प्राप्त होता है। विवाह में अकारण विघ्न उपस्थित होते हैं। विवाह में बिलम्ब भी होता है। ऐसी स्थिति में वराहमिहिर के बृहज्जातक के अनुसार ............**परिणमति फलोक्तिः स्वप्नचिन्तास्ववीर्यैः**[3] अर्थात निर्बल दाम्पत्य सुख द्योतक ग्रह दशा में स्वप्न तथा मानसिक चिंतन में ही दाम्पत्यसुख समाप्त हो जाते हैं। मिथ्याचार एक पारिभाषिक शब्द है। मिथ्याचार का उदहारण वर्तमान समय में यत्र तत्र सर्वत्र देखा जा सकता है। जिसके परिणामस्वरूप विवाह में विलम्ब तथा दाम्पत्य सुख में न्यूनता सर्वत्र देखी जा सकती है।

**३. ब्रह्मचर्याश्रम में सम्बन्धित नियमों का पालन न करनाः-**

ब्रह्मचर्याश्रम, गृहस्थाश्रम, बाणप्रस्थाश्रम एवं सन्यासाश्रम ये भारतीय संस्कृति के चार मानक स्तम्भ हैं। इस भारतीय आश्रम व्यवस्था के कारण ही विश्व में भारतीय संस्कृति को सर्वश्रेष्ठ स्थान प्राप्त है। **शतायुर्वै पुरुषः** अथवा

---

2. अष्टममायुषस्थानमष्टमादष्टमं तु यत्। तयोरपि व्ययास्थानं मारकस्थानमुच्यते।।
लघुपाराशरी-

3. बृहज्जातकम् दशान्तर्दशाध्यायः श्लो.सं. २२

**जीवेम शरदः शतम्** आदि सिद्धन्तानुसार के अनुसार मनुष्य कि आयु १०० वर्ष मानकार चार आश्रमों हेतु पच्चीस-पच्चीस वर्ष एक-एक आश्रम के लिए समय निर्द्धारित किए गये हैं। अर्थात् २५ वर्ष ब्रह्मचर्याश्रम, २५ वर्ष गृहस्थाश्रम तथा इस प्रकार आगे भी २५-२५ वर्ष वाणप्रस्थाश्रम तथा सन्यासाश्रम के लिए निश्चित किए गए हैं। मानवजीवन के प्रथम आश्रम ब्रह्मचर्याश्रम में जन्म से २५ वर्ष तक ब्रह्मचर्यव्रत का पालन करते हुए मानव मात्र को विद्यार्जन करना चाहिए। इस समय यदि कोई कुसंगति वश यदि ब्रह्मचर्याश्रम के सिद्धन्त की अनदेखी करके स्वेच्छाचार करता है तो उसके विवाह में बिलम्ब तथा दाम्पत्यजीवन अत्यन्त दुःखद हो जाता है। वर्तमान में ऐसा बहुधा देखा गया है।

**४. अनुद्योगिता-** गृहस्थाश्रम में धन की अपेक्षा होती है। माता-पिता की आर्थिक स्थिति अनुकूल नहीं होने के कारण वर को अर्थार्जन में प्रवृत्त होना चाहिए। आर्थिक रूप से समृद्धि अथवा स्वावलम्बन के अभाव में वर का विवाह नहीं होता। लेकिन अब ऐसी स्थिति कन्याओं में भी देखी जा रही है जो एक स्वस्थ समाज के लिए उचित नहीं है। उचित समय में विवाह नहीं होने से सन्तानोत्पत्ति में विभिन्न प्रकार की समस्याओं का सामना करना पडता है। आजकल अप्रेशन के माध्यम से बच्चों का जन्म होना, गर्भ में विकृति होना, समय से पूर्व अप्रेशन के माध्यम से बच्चों का जन्म सुस्पष्ट रूप से देखा जा सकता है। अतः व्यर्थ के दिखावे में अर्थ का अपव्यय नहीं करते हुए वर वधू के माता पिता को २५ वर्ष से पूर्व ही विवाह के लिए प्रयास करते रहना चाहिए। विवाह एक संस्कार है। जैसे ऋषियों ने जातकर्म, नामकरण, अन्नप्राशन, मुण्डन, चूड़ाकरण, उपनयनादि के लिए एक निश्चित समय निर्धारित किये हैं और उसके सम्पादन भी उक्त समय पर ही किये जाते हैं, उसी प्रकार विवाह संस्कार को ब्रह्मचर्य आश्रम के समाप्ति काल तक आवश्य ही कर लेना चाहिए।

मानव कल्याण के निमित्त सृष्टि व्यवस्था निर्बाधित रूप से चलती रहे इसके लिए स्मृतिग्रन्थों में सनातन संस्कृति के निमित्त समुचित मार्गदर्शन किये हैं। जिसमे आठ प्रकार के विवाह[4] का वर्णन है।

**ब्राह्मो दैवस्तथा चार्षः प्राजापत्यस्तथाऽऽसुरः।**
**गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः।।**

इन ब्राह्म-दैव-आर्ष-प्राजापत्य-आसुर-गान्धर्व-राक्षस-पैशाच विवाह के प्रकारों में ब्राह्म विवाह को सर्वोत्तम विवाह माना गया है। इससे उत्पन्न संतति २१ पीढ़ी को पवित्र करने वाली मानी गयी है। दैवविवाह अभी व्यवहार में नहीं देखी जाती। क्योंकि इसमें ज्योतिष्टोमादि महनीय यज्ञ कराने वाले आचार्य को अलंकरणों से सुसज्जित कन्या दान करने का विधान है। यह अभी व्यवहार में नहीं है। आर्ष विवाह में वर से (लोभ भावना से रहित होकर) गाय और बैल लेकर वाक्सिद्धि के लिए कन्या दान का विधान है। अतः ब्राह्म विवाह के अतिरिक्त अन्यान्य विवाह को समाज मान्यता नहीं देता। एतदर्थ ब्राह्मविवाह के अतिरिक्त समस्त सप्त विध विवाहों को क्रमशः अधमाधम कहा गया है।

एतदर्थ विवाह संस्कार के सप्तपदी के क्रम में वर कन्या से निम्नलिखित श्लोक के माध्यम से संकल्प कराता है।

**आदौ धर्मधरा कुटुम्बसुखदा मिष्टाप्रियाभाषिणी।**
**क्रोधालस्यनिवारिका सुखकरा आज्ञानुगावर्तिनी।।**
**शास्त्रानन्दयवृद्धशासनपरा धर्मानुगा सादरम्।**
**एते सौम्यगुणा वसन्ति सततं वामेहि सा त्वं भव॥**

अर्थात् प्रथम तो हमारे कुल का जो धर्म है उसे तू धारण करो, तो बाये अंग आओ (२) हमारा जो कुटुम्ब है उसको सुख दो, तो बायें अंग आओ (३) मीठे वचन उच्चारण करो और क्रोध, आलस्य का त्याग करो तथा धर्मानुकूल वृद्धजनों के उपदेश को सादर स्वीकार करो, तो बायें अंग आओ (४) यश और सुख दो तो बायें अंग आओ (५) मेरी आज्ञा का पालन करो तो बायें अंग आओ (६) मेरे जो माता-पिता हैं उनकी टहल करो तो बायें अंग आओ (७) मेरी जो बहनें हैं उनसे क्रोध न करो तो बायें अंग आओ। ये गुण तुम्हारे अन्दर हों तो बायें अंग आओ। इसके अनन्तर हृदयालम्भन का विधान है।

**ॐ मम व्रते ते हृदयं दधामि मम चित्तमनुचित्तं तेऽअस्तु।**
**मम वाचमेकमना जुषस्व प्रजापतिष्ट्वा नियुनक्तु मह्यम्॥**

इस प्रकार ब्राह्म विवाह सकल विवाहों में सर्वश्रेष्ठ है।

**विवाह विलम्बदोष निवारण हेतु उपचार-**

विवाह विलम्ब के दोषों के निवारण हेतु वर कन्या के लिए ज्योतिष शास्त्र में पृथक् पृथक् उपाय बतायें गये हैं।

१. कन्या के मांगलिकयोग निवारणार्थ अश्वत्थ/कुम्भादिविवाह का विधान है।

२. विवाहार्थी लड़के लड़कियों को शारीरिक एवं मानसिक रूप से विवाह पूर्व पूर्ण ब्रह्मचर्य का पालन करना चाहिए।

३. विवाहविलम्ब योग वाले लड़कों को तद्योगकारक ग्रहों की आराधना के साथ जगदम्बा की आराधना करनी चाहिए। इसके साथ ही किसी अच्छे दैवज्ञ के परमर्श

4. मुहूर्तचिन्तामणिः, विवाहप्रकरणम्, पीयूषधाराटीका

## षोडशोपचार-देवपूजनविधिः

यज्ञकर्त्ता पूजन के दिन शान्तचित्त होकर शुद्ध-आसन पर पूर्वाभिमुख अथवा उत्तराभिमुख बैठकर आचमन प्राणायामादि करके अपने अभीष्ट देवता का स्मरण करके पूजन प्रारम्भ करे ।

सर्वप्रथम जल शुद्धि हेतु हाथ में जल कुश लेकर निम्नलिखित मन्त्र को पढ़े -

**ॐअपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा ।**
**यः स्मरेत् पुण्डरीकाक्षं सबाह्याऽभ्यन्तरः शुचिः।।**

इस जल को पूजनोपकरण सामग्री एवं अपने शरीर पर छीटें ।

पुनः हाथ में जल लेकर गंगादि नदियों एवं प्रयागादि तीर्थों का स्मरण करते हुए निम्नलिखित मन्त्र से जल शुद्धि करे -

**ॐगङ्गे च यमुने चैव गोदावरी सरस्वती ।**
**नर्मदे सिन्धु-कावेरी जलेऽस्मिन् सन्निधिं कुरु ।।**

निम्नलिखित मन्त्र को पढ़कर आसन शुद्ध्यर्थ जल को आसन पर छीटें -

**ॐपृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।**
**त्वं च धारय मां देवि पवित्रं कुरु चासनम् ।।**

निम्नलिखित मन्त्र से दिग्बन्धन हेतु पीला सरसों अथवा अक्षत दिशाओं में छीटें-

**ॐ अपसर्पन्तु ते भूता ये भूता भूतले स्थिताः ।**
**ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ।।**

हाथ में पुष्पाक्षत लेकर अपने इष्टदेवता का स्मरण करते हुए स्वस्तिवाचन करे ।

### शान्तिवाचनम्-

ॐ आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासोऽअपरीतासऽउद्भिदः ।
देवा नो यथा सदमिद् वृधेऽअसन्नप्रायुवो रक्षितारो दिवे दिवे ।। १।।
देवानां भद्रा सुमतिर्ऋजूयतां देवानाँ्रातिरभि नो निवर्त्तताम् ।
देवानाँ्सख्यमुपसेदिमा वयं देवा नऽआयुः प्रतिरन्तु जीवसे ।। २।।
तान्पूर्वया निविदा हूमहे वयं भगं मित्रमदितिं दक्षमस्रिधम् ।
अर्यमणं वरुणँ्सोममश्विना सरस्वती नः सुभगा मयस्करत् ।। ३।।
तन्नो वातो मयोभु वातु भेषजं तन्माता पृथिवी तत्पिता द्यौः ।
तद् ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतं धिष्ण्या युवम् ।। ४।।
तमीशानं जगतस्तस्थुषस्पतिं धियन्जिन्वमवसे हूमहे वयम् ।
पूषा नो यथा वेदसामसद् वृधे रक्षिता पायुरदब्धः स्वस्तये ।। ५।।
स्वस्ति नऽइन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्योऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ।। ६।।
पृषदश्वा मरुतः पृश्निमातरः शुभँ यावानो विदथेषु जग्मयः ।
अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवाऽअवसा गमन्निह ।। ७।।
भद्रं कर्णेभिः श्रृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवाँ्सस्तनूभिर्व्यशेमहि देवहितं यदायुः ।। ८।।
शतमिन्नु शरदोऽअन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् ।
पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ।। ९।।
अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।
विश्वे देवाऽअदितिः पञ्च जनाऽअदितिर्जातमदितिर्जनित्वम् ।। १०।।

ॐ द्यौः शान्तिरन्तरिक्षँ्शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः। वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्वँ्शान्तिः शान्तिरेवशान्तिः सामाशान्तिरेधि।।

यतो यतः समीहसे ततो नोऽअभयं कुरु। शं नः कुरु प्रजाभ्योऽभयं नः पशुभ्यः।।

ॐश्रीमन्महागणाधिपतये नमः। ॐलक्ष्मी-नारायणाभ्यां नमः। ॐउमामहेश्वराभ्यां नमः। ॐवाणी-हिरण्यगर्भाभ्यां नमः। ॐशची-पुरन्दराभ्यां नमः। ॐमातृ-पितृचरणकमलेभ्यो नमः। ॐइष्टदेवताभ्यो नमः। ॐकुलदेवताभ्यो नमः। ॐग्रामदेवताभ्यो नमः। ॐ स्थानदेवताभ्यो नमः। ॐवास्तुदेवताभ्यो नमः। ॐसर्वेभ्यो देवेभ्यो नमः। ॐसर्वेभ्यो ब्राह्मणेभ्यो नमः। ॐसिद्धि-बुद्धिसहिताय श्रीमन्महागणाधिपतये नमः।।

ॐशान्तिः शान्तिः शान्तिः ।।

**अथ संकल्प** :-

ॐविष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य ब्रह्मणोऽह्नि द्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे जम्बूद्वीपे भारतवर्षे आर्यावर्तैकदेशान्तरगते ......नगरे/ग्रामे/क्षेत्रे....संवत्सरे .... अयने ..... ऋतौ..... मासे.... पक्षे....तिथौ..... वासरे.... गोत्रः ..... शर्मा/वर्मा/गुप्त/दासोऽहं श्रुतिस्मृतिपुराणोक्त-फलप्राप्त्यर्थं मम सकुटुम्बस्य सपरिवारस्य आयुरारोग्यैश्वर्याभिवृद्ध्यर्थं दैहिक-दैविक-भौतिक-त्रिविध-तापोपशमनार्थं धर्मार्थ-काम-मोक्षफलप्राप्त्यर्थं सकलदुरितोपशमनार्थं नित्यकल्याणप्राप्त्यर्थं यथोपलब्ध-पूजनोपकरणैः अङ्देवतापूजनपूर्वक-(पूर्वाङ्गी-कृतं) श्री........प्रधानदेवतापूजनञ्चाहं करिष्ये ।

**आवाहनम्-** लौकिकम् : आगच्छन्तु सुरश्रेष्ठ ! भवन्तवत्र स्थिराः समे ।
यावत्पूजां करिष्यामि तावत्तिष्ठन्तु सन्निधौ ।।
वैदिकम्-: ॐसहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात् ।
सभूमिँ सर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ।। आवाहनार्थं पुष्पं सम०।
लौकिकम्- : ॐ आगच्छागच्छ देवेश त्रैलोक्यतिमिरापह ।
क्रियमाणां मया पूजां गृहाण सुरसत्तम ।।
देव्याः- ॐ अम्बेऽअम्बिकेऽम्बालिके न मा नयति कश्चन ।
ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम्।। आवाहनार्थं पुष्पाक्षतान् सम०।
आसनम्- लौ. : अनेकरत्नसंयुक्तं नानामणिगणान्वितम् ।
इमं हेममयं दिव्यमासनं प्रतिगृह्यताम् ।। पुष्पासनं सम०।।
(वै.) : ॐ पुरुषऽएवेदँ सर्वं यद् भूतं यच्च भाव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ।।
प्रतिष्ठा -(लौ.) अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च ।
अस्यै देवत्वमर्चायै मामहेति च कश्चन ।।
प्राणप्रतिष्ठापूर्वकं नमस्करोमि ।

(वै.) : ॐमनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञँ समिमं दधातु । विश्वेदेवास इहमादयन्तामोँ ३ प्रतिष्ठ ।।
पाद्यम्- (लौ.): ॐ गङ्गोदकं निर्मलञ्च सर्वसौगन्ध्य संयुतम् ।
पादप्रक्षालनार्थाय दत्तं ते प्रतिगृह्यताम् ।।
(वै.): ॐएतावानस्य महिमातोज्यायाँश्च पुरुषः ।
पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि ।। पाद्यं सम०।।
अर्घ्यम्- (लौ.): गन्धपुष्पाक्षतैर्युक्तं मध्ये सम्पादितं मया ।
गृहाण भगवन् देव ! प्रसन्नो वरदो भव ।।
(वै.) : ॐ त्रिपादूर्ध्वऽउदैत्पुरुषः पादोऽस्येहाभवत्पुनः ।
ततो विष्वङ्व्यक्रामत्साशनानशनेऽअभि ।। अर्घ्यं सम०।।
आचमनम्- (लौ.) : कर्पूरेण सुगन्धेन वासितं स्वादु-शीतलम् ।
तोयमाचमनीयार्थं गृहाण परमेश्वर ।।
(वै.) : ॐ ततोव्विराडजायत व्विराजोऽअधिपूरुषः ।
सजातोऽअत्यरिच्यत पश्चाद्भूमिमथो पुरः ।। आचमनीयं जलं सम०।
जलस्नानम्- (लौ.) मन्दाकिन्यास्तु यद्वारि सर्वपापहरं शुभम् ।
तदिदं कल्पितं देव स्नानार्थं प्रतिगृह्यताम् ।।
(वै.) : ॐ तस्माद्यज्ञात्सर्वहुतः सम्भृतं पृषदाज्यम् ।
पशूस्ताँश्चक्रे वायव्या नारण्या ग्राम्याश्च ये ।। स्नानीयं जलं सम०।
दुग्धस्नानम्- (लौ.): कामधेनुसमुद्भूतं सर्वेषां जीवनं परम् ।
पावनं यज्ञहेतुश्च पयः स्नानार्थमर्पितम् ।।
(वै.): ॐ पयः पृथिव्यां पयऽओषधीषु पयो दिव्यन्तरिक्षे पयोधाः।
पयस्वतीः प्रदिशः सन्तु मह्यम् ।। पयः स्नानं सम०।
दधिस्नानम्-(लौ.) : पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम् ।
दध्यानीतं मया देव ! स्नानार्थं प्रतिगृह्यताम् ।।

(वै.) : ॐ दधिक्राब्णोऽअकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभि नो मुखाकरत्प्रणऽआयू॒ँषितारिषत् । दधिस्नानं सम०।
घृतस्नानम्- (लौ.) : नवनीतं समुत्पन्नं सर्वसन्तोषकारकम् ।
घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम् ।।
(वै.) : ॐ घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतं वस्य धाम ।
अनुष्वधमा वह मादयस्व स्वाहा कृतं वृषभवक्षि हव्यम् ।। घृतस्नानं सम०।
मधुस्नानम् (लौ.): पुष्परेणुसमुद्भूतं सुस्वादु मधुरं मधु ।
तेजः पुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम् ।।
(वै): ॐ मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः ।
माध्वीर्न्नः सन्त्वोषधीः । मधु नक्तमुतोषसो मधुमत्पार्थिव॒ँरजः ।
मधुद्यौरस्तु नः पिता। मधुमान्नो वनस्पतिर्म्मधुमाँ२ऽअस्तु सूर्यः माध्वीर्गावो
भवन्तु नः ।। मधुस्नानं समर्पयामि ।
शर्करास्नानम् (लौ.) : इक्षुररससमुद्भूतां शर्करां पुष्टिदां शुभाम् ।
मलापहारिकां दिव्यां स्नानार्थं प्रतिगृह्यताम् ।
(वै.):ॐ अपा॒ँरसमुद्वयस॒ँसूर्ये सन्त॒ँसमाहितम्। अपा॒ँ रसस्य योरसस्तंवो
गृह्णाम्युतममुपयाम गृहीतोसीन्द्रायत्वा जुष्टङ् गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टत-
मम्। शर्करास्नानं समर्पयामि ।
पञ्चामृतस्नानम्- (लौ.) : पयो दधि घृतं चैव मधु च शर्करान्वितम् ।
पञ्चामृतं मयाऽऽनीतं स्नानार्थं प्रतिगृह्यताम् ।।
(वै.) ॐ पञ्चनद्यः सरस्वतीमपियन्ति सस्रोतसः।
सरस्वती तु पञ्चधासो देशेऽभवत्सरित् ।। पञ्चामृतस्नानं सम ० ।
शुद्धोदकस्नानम्- (लौ.) : शुद्धं यत्सलिलं दिव्यं गंगाजलसमं स्मृतम् ।
समर्पितं मया भक्त्या शुद्धस्नानाय गृह्यताम्।। स्नानार्थं शुद्धोदकं सम०।
(वै.) ॐ शुद्धवालः सर्वशुद्धवालो मणिवालस्तऽआश्विनाः श्येतः श्येताक्षो रुणस्ते रुद्राय
पशुपतये कर्णा यामा अवालिप्ता रौद्रा नभो रूपाः पार्जन्याः। स्नानार्थं शुद्धोदकं सम०।

वस्त्रम्- (लौ.) : शीतवातोष्णसंत्राणं लज्जाया रक्षणं परम् ।
देहालङ्करणं वस्त्रमतः शान्तिं प्रयच्छ मे ।।
(वै.) : ॐ तस्माद्यज्ञात् सर्व्वहुतऋच सामानिजज्ञिरे।
छन्दा॒ँसि जज्ञिरे तस्माद्यजुस्तस्मादजायत। वस्त्रोपवस्त्रञ्च सम०।
यज्ञोपवीतम्- (लौ.): यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात्।
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः।।
(वै.) : ॐ तस्मादश्वाऽअजायन्त ये के चोभयादतः।
गावो ह जज्ञिरे तस्मात्तस्माज्जाताऽअजावयः ।। यज्ञोपवीतं सम०।
चन्दनम्- (लौ.): श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् ।
विलेपनं सुरश्रेष्ठ ! चन्दनं प्रतिगृह्यताम् ।।
(वै.) : ॐ त्वां गन्धर्वा अखनँस्त्वामिन्द्रस्त्वां बृहस्पतिः ।
त्वामोषधे सोमोराजा विद्वान्यक्ष्मादमुच्यत ।। चन्दनं सम०।
अक्षतम्- (लौ.): अक्षताश्च सुरश्रेष्ठ! कुङ्कुमाक्ताः सुशोभिताः ।
मया निवेदिता भक्त्या गृहाण परमेश्वर ।।
(वै.) : ॐ अक्षन्नमीमदन्तह्यवप्रियाऽअधूषत ।
अस्तोषत स्वभानवो विप्रानविष्ठया मतीयोजान्विन्द्रते हरी। अक्षतं सम०।
पुष्पाणि-(लौ.) : ॐमाल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो ।
मयानीतानि पुष्पाणि गृहाण परमेश्वर! ।।
(वै.) : ॐयत्पुरुषं व्यदधुः कतिधाव्यकल्पयन् ।
मुखङ्किमस्यासीत्किम्बाहूकिमूरूपादा उच्येते ।। पुष्पाणि सम०।
पुष्पमाला-(लौ.): ॐमाल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो ।
मयानीतानि पुष्पाणि गृहाण परमेश्वर ! ।।
(वै.) : ॐ ओषधीः प्रतिमोदध्वं पुष्पवतीः प्रसूवरीः ।
अश्वा इव सजित्वरी र्व्वीरुधः पारयिष्ण्वः।। ॐपुष्पमालां सम०।
दूर्वा- (लौ.) : ॐदूर्वाङ्कुरान् सुहरितानमृतान् मङ्गलप्रदान् ।
आनीतांस्तव पूजार्थं गृहाण परमेश्वर ! ।।

(वै.): ॐकाण्डात्काण्डाप्ररोहन्ती परुषः परुषस्परि ।
एवानो दूर्वे प्रतनुसहस्रेण शतेन च ।। ॐदूर्वादलं सम०।
धूपः - (लौ.) : ॐवनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ।।
(वै.): ॐ ब्राह्मणोऽस्यमुखमासीद् बाहूराजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्या ँ्शूद्रोऽअजायत ।। धूपमाघ्रापयामि।
दीपः-(लौ.) : ॐ साज्यञ्च वर्त्तिसंयुक्तं वह्निना योजितं मया ।
दीपं गृहाण देवेश त्रैलोक्यतिमिरापहम् ।।
(वै.): ॐचन्द्रमा मनसो जातश्चक्षोः सूर्य्योऽअजायत ।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत।। ॐदीपं दर्शयामि।
नैवेद्यम्-(लौ.) : ॐशर्कराखण्डखाद्यानि दधिक्षीरघृतानि च ।
आहारं भक्ष्यभोज्यञ्च नैवेद्यं प्रतिगृह्यताम् ।।
(वै.): ॐ नाभ्या आसीदन्तरिक्ष ँ्शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ२ऽअकल्पयन्।। ॐनैवेद्यं निवेदयामि।
ऋतुफलम्-(लौ.): ॐ इदं फलं मया देव! स्थापितं पुरतस्तव ।
तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ।।
(वै.): ॐयाः फलिनीर्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः।
बृहस्पति प्रसूतास्तानो मुञ्चन्त्व ँ्हसः।। ऋतुफलं सम०।
ताम्बूलम्- (लौ.) : ॐपूगीफलं महद् दिव्यं नागवल्लीदलैर्युतम् ।
एलालवङ्गसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ।।
(वै.): ॐयत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तोऽस्यासीदाज्यं ग्रीष्मऽइध्मः शरद्धविः ।। ताम्बूलं सम०।
दक्षिणा- (लौ.):ॐहिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ।।
(वै.): ॐहिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेकऽआसीत्।
सदाधारपृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम।। दक्षिणाद्रव्यं सम०।
मन्त्रपुष्पाञ्जलिः (लौ) : ॐ श्रद्धया सिक्तया भक्त्या हार्दप्रेम्णा समर्पितः ।
मत्रपुष्पाञ्जलिश्चायं कृपया प्रतिगृह्यताम् ।।

(वै.) ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
तेहनाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ।। मत्रपुष्पाञ्जलिं सम०।
ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन्।
ते ह नाकम्महिमानः सचन्त यत्र पूर्व्वे साध्याः सन्ति देवाः ॥
ॐ राजाधिराजाय प्रसह्य साहिने नमो वयं वै श्रवणाय कुर्महे।
स मे कामान् काम कामाय मह्यं कामेश्वरो वैश्रवणो ददातु॥
कुबेराय वैश्रवणाय महाराजाय नमः॥

ॐ स्वस्ति साम्राज्यं भोज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यमयं समन्तपर्यायी स्यात् सार्वभौमः सार्वायुष आन्तादापरार्धात् पृथिव्यै समुद्रपर्यन्ताया एकराडिति तदप्येषश्लोकोऽभिगीतो मरुतः परिवेष्टारो मरुत्तस्यावसन गृहे। आवीक्षितस्य कामप्रेर्विश्वेदेवाः सभासद इति ॥

ॐ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्।
सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः॥
ॐ तत्पुरुषाय विद्महे नारायणाय धीमहि तन्नो विष्णुः प्रचोदयात्॥
कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वाऽनुसृतस्वभावात्।
करोमि यद्यत् सकलं परस्मै नारायणायेति समर्पयेत्तत्॥ पुष्पाञ्जलिं समर्पयामि।
**प्रदक्षिणा**-ॐ ये तीर्थानि प्प्रचरन्ति सृकाहस्ता निषङ्गिणः ।
तेषा ँ् सहस्रयोजनेव धन्वानि तन्मसि॥

## क्षमा-प्रार्थना

मन्त्रहीनं क्रियाहीनं भक्तिहीनं जनार्दन। यत्पूजितं मया देव! परिपूर्णं तदस्तु मे॥
यदक्षरपदभ्रष्टं मात्राहीनं च यद्भवेत्। तत्सर्वं क्षम्यतां देव! प्रसीद परमेश्वर॥

## विसर्जनम्-

यजमानहितार्थाय पुनरागमनाय च। गच्छन्तु च सुरश्रेष्ठाः स्वस्थानं परमेश्वर।।

## यजमान को आशीर्वाद-मन्त्र-

अक्षतान् विप्रहस्तात्तु नित्यं गृह्णन्ति ये नराः। चत्वारि तेषां वर्धन्ते आयुः कीर्तिर्यशोबलम्।।
मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः। शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव॥
**श्रीवर्चस्वमायुमायुष्यमारोग्यमाविधात् पवमानं महीयते ।**
**धनं धान्यं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः॥** यजमान को आशीर्वादात्मक अक्षत दें।
।।ॐ शान्तिः शान्तिः शान्तिः।।

## अथ तर्पणविधिः

प्रातः सन्ध्यां कृत्वा गायत्र्या एकमेकमञ्जलिं दद्यात्। ततः सूर्याभिमुखमुतिष्ठन् वदेत्-

**ॐ असावादित्यो ब्रह्मः। ॐ उद्वयं तमसस्परि स्वः पश्यन्त उत्तरम्। देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्। ॐ उदुत्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्यम्।**

**ॐ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः। आप्राद्यावा पृथिवीऽअन्तरिक्षँ सूर्य्यऽआत्मा जगतस्तस्थुषश्च। तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः शतं जीवेम शरदः शतँ श्रुणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात्।**

इति प्रार्थयन् हस्ते ताम्रपात्रे जलं कुशत्रयं, यवान्नक्षतांश्च गृहीत्वा सङ्कल्पं कुर्यात् । ततः संकल्पः-

**ॐविष्णुर्विष्णुर्विष्णु अद्येत्यादि......शुभपुण्यतिथौ श्रुति-स्मृति-पुराणोक्त-फल- प्राप्त्यर्थं परमेश्वरप्रीत्यर्थं देव-ऋषि-मनुष्य-पितृतर्पणमहं करिष्ये।**

(ततः शिवसंकल्पसूक्तं पठेत्। ततो दक्षिणहस्त-अनामिकया यज्ञोपवीतं धृत्वा निम्नमन्त्रं पठेत्।

**ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुनाम्य छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः। तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुनेतच्छकेयम्।।**

तत आचम्य गायत्रीमन्त्रं त्रिवारं पठित्वा तज्जलमभिमन्त्य मुष्ठिनिःसृतजलेन कुशत्रयैः शिरः प्रभृति पादान्तं मार्जयेत्। शेषजलं भूमौ प्रक्षिपेत्। ततः सकृदाचम्य कुशत्रयं पूर्वाग्र-आवाहनपात्रे स्थापयित्वा दक्षकरेण सम्पुटीकृत्य निम्नलिखितं मन्त्रं पठेत्।

**आगच्छन्तु महाभागा विश्वेदेवा महाबलाः।**
**ये तर्पणेऽत्र विहिताः सावधाना भवन्तु ते।।**
**ॐ विश्वेदेवाः शृणुतेमँ हवं मे ये अन्तरिक्षे य उपद्यविष्ठ।**
**ये अग्निर्जिह्वा ऽउत वा यजत्राऽआसद्यास्मिन् बर्हिषि मादयध्वम्।।**(यजु.३३-५३)

### १. देवतर्पणम्-

(पूर्वाभिमुख बैठें, यज्ञोपवीत सव्य हो, दाहिना घुटना जमीन पर हो, अर्घपात्र में चावल रखें, त्रिकुशा का अग्रभाग पूर्वाभिमुख हो, देवतीर्थ (अङ्गुली के अग्रभाग) से 1-1 जलाञ्जलि निम्नलिखित मत्र को पढ़ते हुए तर्पण करें)

**ॐब्रह्मा तृप्यताम्। ॐ विष्णुस्तृप्यताम्। ॐ रुद्रस्तृप्यताम्। ॐ प्रजापतिस्तृप्यताम्। ॐ देवास्तृप्यन्ताम्। ॐछन्दांसि तृप्यन्ताम्। ॐवेदास्तृप्यन्ताम्। ॐऋषयस्तृप्यन्ताम्। ॐपुराणाचार्यास्तृप्यन्ताम्। ॐगन्धर्वाचार्यास्तृप्यन्ताम्। ॐइतराचार्यास्तृप्यन्ताम्। ॐसम्वत्सरः सावयवस्तृप्यताम्। ॐदेव्यस्तृप्यन्ताम्। ॐअप्सरसस्तृप्यन्ताम्। ॐदेवानुगास्तृप्यन्ताम्। ॐनागास्तृप्यन्ताम्। ॐसागरास्तृप्यन्ताम्। ॐपर्वतास्तृप्यन्ताम्। ॐसरितस्तृप्यन्ताम्। ॐमनुष्यास्तृप्यन्ताम्। ॐयक्षास्तृप्यन्ताम्। ॐरक्षांसि तृप्यन्ताम्। ॐपिशाचास्तृप्यन्ताम्। ॐसुपर्णास्तृप्यन्ताम्। ॐभूतानि तृप्यन्ताम्। ॐपशवस्तृप्यन्ताम्। ॐवनस्पतयस्तृप्यन्ताम्। ॐओषधयस्तृप्यन्ताम्। ॐभूतग्रामचतुर्विधस्तृप्यन्ताम्।**

### 2. ऋषितर्पणम्- (पूर्व विधि से)

**ॐमरीचिस्तृप्यताम्। ॐअत्रिस्तृप्यताम्। ॐअङ्गिरास्तृप्यताम्। ॐपुलस्त्यस्तृप्यताम्। ॐपुलहस्तृप्यताम्। ॐक्रतुस्तृप्यताम्। ॐवशिष्ठस्तृप्यताम्। ॐप्रचेतास्तृप्यताम्। ॐभृगुस्तृप्यताम्। ॐ नारदस्तृप्यताम्।**

### 3. दिव्यमनुष्यतर्पणम्-

(उत्तराभिमुख होकर यज्ञोपवीत कण्ठ में धारण करें, गमछा भी कण्ठी की तरह हो, घुटना जमीन पर न होवे, यव मिश्रित जल से त्रिकुशा को उत्तराग्र करके प्रजापति तीर्थ अर्थात् दाहिने हाथ की कनिष्ठा के मूल से, 2-2 अञ्जलि जल देवें ) ।

ततो निवीति (उपवीतं माला-इव कण्ठे धारणीयम्) उत्तराभिमुखावाहनकुशानुत्तराग्रान् कृत्वा पुष्पाक्षतैरावाहयेत्। ॐ सनकाद्या सप्तदिव्यमनुष्याऽत्रागच्छत।

ततः भूमौ यवान् विकीर्य प्रजापतितीर्थेन (कनिष्ठाङ्गुलिमूलेन) निम्नलिखितान् दिव्यमनुष्यान् प्रत्येकं द्विवारं तर्पयेत्।

**ॐ सनकस्तृप्यताम्। (2) ॐ सनन्दनस्तृप्यताम्। (2) ॐ सनातनस्तृप्यताम्। (2) ॐकपिलस्तृप्यताम्। (2) ॐ आसुरिस्तृप्यताम्। (2) ॐ वोढुस्तृप्यताम्। (2) ॐ पञ्चशिखस्तृप्यताम्। (2)**

### 4. दिव्यपितृतर्पणम्-

(दक्षिणाभिमुख हो यज्ञोपवीत और गमछा दाहिने कन्धे पर धारण करें, बायाँ घुटना जमीन पर हो, तिलाञ्जलि से त्रिकुशा को बीच से मोड़कर जड़ तथा अग्रभाग को तर्जनी और अँगूठे के मूल में रखकर पितृतीर्थ अर्थात् दाहिने हाथ की तर्जनी और अँगुष्ठ मूल से, 3-3 अञ्जलि जल देवें )।

ततो द्विगुणीकृत्य कुशत्रयमूलाग्रेन अञ्जलिना (ताम्रपात्रेण वा) पितृतीर्थेन तर्पयेत्।

**ॐ कव्यवाडनलस्तृप्यताम्। इदं सतिलं जलं (गङ्गाजलं वा) तस्मै स्वधा नमः।। 3**

**ॐ सोमस्तृप्यताम्। इदं सतिलं जलं (गङ्गाजलं वा) तस्मै स्वधा नमः।। 3**

**ॐ यमस्तृप्यताम्। इदं सतिलं जलं (गङ्गाजलं वा) तस्मै स्वधा नमः।। 3**
**ॐ अर्यमास्तृप्यताम्। इदं सतिलं जलं (गङ्गाजलं वा) तस्मै स्वधा नमः।। 3**
**ॐ अग्निष्वात्ताः पितरस्तृप्यन्ताम्। इदं सतिलं जलं तेभ्यः स्वधा नमः।। 3**
**ॐ सोमपाः पितरस्तृप्यन्ताम्। इदं सतिलं जलं (गङ्गाजलं वा) तेभ्यः स्वधा नमः।। 3**
**ॐ बर्हिषदः पितरस्तृप्यन्ताम्। इदं सतिलं जलं (गङ्गाजलं वा) तेभ्यः स्वधा नमः।। 3**

(इति प्रत्येकं त्रिवारमञ्जलिदानम्)

### 5. यमतर्पणम्-

(विधि पूर्वोक्त दिव्यपितृतर्पणवत्)

**ॐ यमाय नमः (3)। ॐ धर्मराजाय नमः(3)। ॐ मृत्यवे नमः (3)। ॐ अन्तकाय नमः (3)। ॐ वैवस्वताय नमः (3)। ॐ कालाय नमः (3)। ॐ सर्वभूतक्षयाय नमः (3)। ॐ औदुम्बराय नमः (3)। ॐ दध्नाय नमः(3)। ॐ नीलाय नमः(3)। ॐ परमेष्ठिने नमः(3)। ॐ वृकोदराय नमः(3)। ॐ चित्राय नमः(3)। ॐ चित्रगुप्ताय नमः (3)।**

### 6. मनुष्यपितृतर्पणम्

(पूर्वोक्त विधि से पितरों का आवाहन करें) ।

ततोऽपसव्यः दक्षिणमुखः त्रिकुशान् दक्षिणाग्रं कृत्वा वामजानुं भूमौ निधाय तिल-तुलसी-पुष्पैः कव्यवाडनलादयो दिव्यपितृन्नावाहयेत्।

**ॐ कव्यवाडनलादयो दिव्यपितरोऽत्रागच्छत। ॐवसवो रुद्रादित्याचार्या अत्रागच्छत।**
**ॐ उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि। उशन्नुशतऽआ वह पितृन् हविषेऽअत्तवे।।**
**पितृनावाहयिष्ये, आवाह्य। ॐ आयन्तुनः पितरः सोम्यासोऽग्निष्वात्ताःपथिभिर्देवयानैः।**
**अस्मिन् यज्ञे स्वधया मदन्तोऽधि ब्रुवन्तु तेऽवन्त्वस्मान्।। (यजु.-19-58)**

उपर्युक्तेन मन्त्रेण पितृन् नमस्कृत्य कुशाग्रान् उत्तराभिमुखं कृत्वा ताम्रपात्रे तिलान् संस्थाप्य पितृतीर्थेन प्रत्येकं वारत्रयं तर्पयेत्।

**अमुक गोत्रोऽस्मत्पिता अमुकशर्मा वसुरूपस्तृप्यताम्।इदं सतिलं जलं तस्मै स्वधा नमः।।३**
**अमुकगोत्रोऽस्मत्पितामह अमुकशर्मा रुद्ररूपस्तृप्यताम्। इदं सतिलं जलं तस्मै स्वधा नमः।।**
**अमुकगोत्रोऽस्मत् प्रपितामह अमुकः वसुरूपस्तृप्यताम्।इदं सतिलं जलं तस्मै स्वधा नमः।।३**
**अमुकगोत्रा अस्मत्माता अमुकी देवी वसुरूपा तृप्यताम्।इदं सतिलं जलं तस्यै स्वधा नमः।।३**
**अमुकगोत्रा अस्मत्पितामही अमुकी देवी रुद्ररूपा तृप्यताम्।इदं सतिलं जलं तस्यै स्वधा नमः।। ३**
**अमुकगोत्रा अस्मत् प्रपितामही ... देवी आदित्यरूपा तृप्यताम्।इदं सतिलं जलं तस्यै स्वधा नमः।। ३**

### द्वितीयगोत्रतर्पणम्-

**अमुकगोत्रोऽस्मन्मातामह अमुकशर्मा अत्रागच्छत। इदं सतिलं जलं तस्मै स्वधा नमः।।**
**अमुकगोत्रोऽस्मत् प्रमातामह अमुकशर्मा अत्रागच्छत। इदं सतिलं जलं तस्मै स्वधा नमः।।**
**अमुकगोत्रोऽस्मत् वृद्धप्रमातामह अमुकः अत्रागच्छत। इदं सतिलं जलं तस्मै स्वधा नमः।।**

मन्त्रः-
**आयन्तु नः पितरः सोम्यसोऽग्निष्वात्ताः पथिभिर्देवयानैः।**
**अस्मिन् यज्ञे स्वधया मदन्तोऽधि ब्रुवन्तु तेऽवन्त्वस्मान्।।** (यजु.-19-58)

इति मन्त्रं कृताञ्जलिः पठेत्।

मन्त्रः- **ॐ उदीरतामवरऽउत्परासऽउन्मध्यमाः पितरः सोम्यासः।**
**असुं यऽईयुरवृकाऽऋतज्ञास्ते नोऽवन्तु पितरो हवेषु।।** (यजु.-19-49)

ततः परं निम्नलिखितैः नवभिर्मन्त्रैः पितृतीर्थेन तिलाञ्जलिना तर्पयेत्।

**अमुकगोत्रोऽस्मत्पिता अमुकशर्मा वसुरूपस्तृप्यतामिदं सतिलं जलं तस्मै स्वधा नमः।**

मन्त्रः- **ॐ अङ्गिरसो नः पितरो नवग्वाऽअथर्वाणो भृगवः सोम्यासः।**
**तेषां वयँ् सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम।।** (यजु.-19-50)

**अमुकगोत्रोऽस्मत्पिता अमुकशर्मा वसुरूपस्तृप्यतामिदं सतिलं जलं तस्मै स्वधा नमः।**

मन्त्रः- **ॐ आयन्तु नः पितरः सोम्यसोऽग्निष्वात्ताः पथिभिर्देवयानैः।**
**अस्मिन् यज्ञे स्वधया मदन्तोऽधि ब्रुवन्तु तेऽवन्त्वस्मान्।।** (यजु.-19-58)

**अमुकगोत्रोऽस्मत्पिता अमुकशर्मा वसुरूपस्तृप्यतामिदं सतिलं जलं तस्मै स्वधा नमः।**

मन्त्रः-
**ॐऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम्। स्वधास्थ तर्पयत मे पितृन्।।**
(यजु.-2-34)

**अमुकगोत्रोऽस्मत्पितामहोऽमुकशर्मा रुद्ररूपस्तृप्यतामिदं सतिलं जलं तस्मै स्वधा नमः।**

मन्त्रः- **ॐ अक्षन् पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरः पितरः शुन्धध्वम्।।**

**अमुकगोत्रोऽस्मत्पितामहोऽमुकशर्मा रुद्ररूपस्तृप्यतामिदं सतिलं जलं तस्मै स्वधा नमः।**

मन्त्रः- **ये चेह पितरो ये च नेह याँश्च विद्म याँ२ऽ उ च न प्रविद्म।**
**त्वं वेत्थ यति ते जातवेदः स्वधाभिर्यज्ञँ् सुकृतं जुषस्व।।** (यजु.-19-67)

**अमुकगोत्रोऽस्मत्पितामहोऽमुकशर्मा रुद्ररूपस्तृप्यतामिदं सतिलं जलं तस्मै स्वधा नमः।**

मन्त्रः-
**ॐ मधुवाताऽऋतायते मधुक्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः।।** (यजु.-13-27)

**अमुकगोत्रोऽस्मत् प्रपितामहोऽमुकः आदित्यरूपस्तृप्यतामिदं सतिलं जलं तस्मै स्वधा नमः।**
मन्त्रः-
**ॐ मधुनक्तमुतोषसो मधुमत्पार्थिवꣳ रजः। मधुद्यौरस्तुनः पिता।।** (यजु.-13-28)
**अमुकगोत्रोऽस्मत् प्रपितामहोऽमुकः आदित्यरूपस्तृप्यतामिदं सतिलं जलं तस्मै स्वधा नमः।**
मन्त्रः-
**ॐ मधुमान्नो वनस्पतिर्मधुमाँ २ऽअस्तु सूर्यः। माध्वीर्गावो भवन्तु नः।।** (यजु.- 13-29)
**अमुकगोत्रोऽस्मत् प्रपितामहोऽमुकः आदित्यरूपस्तृप्यतामिदं सतिलं जलं तस्मै स्वधा नमः।**
मन्त्रः-
**ॐ पितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः। अक्षन् पितरोऽमीमदन्त पितरोऽतीतृपन्तपितरः पितरः शुन्धध्वम्।।** (यजु.-19-36)
**अमुकगोत्रोऽस्मत्पितृ-पितामह-प्रपितामहाः अमुकामुकशर्माणः तृप्यन्तामिदं जलं यथाविभागं युष्मभ्यं स्वधा नमः।** (एवं सर्वत्र त्रिवारं जलाञ्जलिदानं कर्तव्यम्।)

### पितृनमस्कारः-

**ॐ नमो वः पितरो रसाय नमो वः पितरो शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्त सतो वः पितरो देष्मैतद्वः पितरो वासऽआधत्त।।** (यजु.- 2-32)

### मातृतर्पणम्-

अमुकगोत्राऽस्मन्माता अमुकीदेवी वसुरूपा तृप्यतामिदं जलं तस्यै स्वधा नमः।। 3।।
अमुकगोत्राऽस्मत्पितामही अमुकीदेवी रुद्ररूपा तृप्यतामिदं जलं तस्यै स्वधा नमः।। 3।।
अमुकगोत्राऽस्मप्रपितामही अमुकीदेवी आदित्यरूपा तृप्यतामिदं जलं तस्यै स्वधा नमः।। 3।।
(ततः समूहरूपेण मातृ-पितामही-प्रपितामहीभ्यः त्रिजलाञ्जलिं दद्यात्।)

### मातामहादितर्पणम्-

अमुकगोत्रोऽस्मन्मातामह अमुकशर्मा वसुरूपस्तृप्यतामिदं जलं तस्मै स्वधा नमः।। 3।।
अमुकगोत्रोऽस्मत् प्रमातामह अमुकशर्मा रुद्ररूपस्तृप्यतामिदं जलं तस्मै स्वधा नमः।। 3।।
अमुकगोत्रोऽस्मद् वृद्धप्रमातामह अमुकशर्मणे आदित्यरूपस्तृप्यतामिदं जलं तस्मै स्वधा नमः।। 3।।

(अत्रैव मन्त्रगुरु-श्वशुर-मातुल-ज्येष्ठकनिष्ठभ्राता-पितृव्यादीनां च स्व स्व गोत्रनामोच्चारणपूर्वकं प्रत्येकमेकैकमञ्जलिना तर्पयेत्। )

### ७. देवासुरयक्षनागादीनां तर्पणम्-

(सव्य विधि द्वारा तर्पण करे)

ततोपनिवीति (सव्यः) पूर्वाभिमुखः, पार्श्वे स्थितकुशाग्रान् पूर्वाभिमुखं कृत्वा देवतीर्थेन एकैकमञ्जलिं जलं तर्पयेत्। अथ मन्त्रः-
**देवासुरास्तथा यक्षा नागा गन्धर्वराक्षसाः। पिशाचा गुह्यकाः सिद्धाःकूष्माण्डास्तरवः खगाः।।**
**जलेचरा भूनिलया वाय्वाधाराश्च जन्तवः। तृप्तिमेते प्रयान्त्वाशु मद्दत्तेनाम्बुनाखिलाः।।**

### ८. नरकस्थितजीवतर्पणम्-

(अपसव्य विधि से)

ततोऽपसव्यः दक्षिणाभिमुखः कुशमूलाग्रान् एकीकृत्य पितृतीर्थेन निम्नमन्त्रं पठित्वा एकाञ्जलिं सतिलं जलं दद्यात्।
**नरकेषु समस्तेषु यातनासु च ये स्थिताः। तेषामाप्यायनायै तद् दीयते सलिलं मया।।**
**येऽबान्धवा बान्धवाश्च येऽन्यजन्मनि बान्धवाः। ते तृप्तिमखिला यान्तु यश्चास्मत्तोऽभिवाञ्छति।।**
**ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः । तेषां हि दत्तमक्षय्यमिदमस्तु तिलोदकम् ।।**
**आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः। तृप्यन्तु पितरः सर्वे मातृमातामहादयः।।**
**अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम्। आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम्।।**

### वस्त्रनिष्पीडनम्-

(गमछा को चार तह करके तिल जल रखकर निम्नलिखित मन्त्र पढ़कर बायें तरफ निचोड़ें) आवाहनकुशत्रयमञ्जलिकुशत्रयं च द्विगुणितं कृत्वा पात्रे क्षिपेत्।
मन्त्रः-
**ये के चास्मत् कुले जाता अपुत्राः गोत्रिणो मृताः।**
**ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडितोदकम्।।**

### भीष्मतर्पणम्-

(भीष्मपितामह हेतु कुशोदक द्वारा पितृतीर्थ से तर्पण करें)

भीष्मपितामहस्य कृते पितृतीर्थेन कुशोदकेन तर्पयेत्।
**व्याघ्रपादसगोत्राय सकृतिप्रवराय च। अपुत्राय ददाम्येतत्सलिलं भीष्मवर्मणे।।**
**भीष्मः शान्तनवो वीरः सत्यवादी जितेन्द्रियः।**
**आभिरद्भिरवाप्नोतु पुत्रपौत्रोचितां क्रियाम्।।**

ततः सव्यः पूर्वाभिमुखः आचम्य गायत्र्या ऋष्यादिकं विन्यस्य यथाशक्ति गायत्रीजपं कुर्यात्।

### ९. सूर्यार्घ्यदानम्-

(अर्घ्यपात्र को स्वच्छ कर पूर्वाभिमुख सव्य हो निम्नलिखित मन्त्रद्वारा सूर्यार्घ्य देवें)

**नमो विवस्वते ब्रह्मन् ! भास्वते विष्णुतेजसे! । जगत्सवित्रे शुचये सवित्रे कर्मदायिने ।।**

तत्पश्चात् परित्रमा करते हुए दिशाओं एवं उनके अधिष्ठित देवों को नमन करें ।

**ॐ प्राच्यै नमः, ॐ इन्द्राय नमः । ॐ आग्नेय्यै नमः। ॐ अग्नये नमः । ॐ दक्षिणायै नमः। ॐ यमाय नमः। ॐ नैऋत्यै नमः। ॐ निऋतये नमः । ॐ प्रतीच्यै नमः। ॐ वरुणाय नमः । ॐ वायव्यै नमः। ॐ वायवे नमः । ॐ उदीच्यै नमः। ॐ कुबेराय नमः। ॐ ऐशान्यै नमः। ॐ ईशानाय नमः । ॐ ऊर्ध्वायै नमः। ॐ ब्रह्मणे नमः। ॐ अधरायै नमः। ॐ अनन्ताय नमः ।**

(इस प्रकार परिक्रमा के अनन्तर निम्नलिखित मन्त्र से १-१ अञ्जलि देवें ।)

**ॐब्रह्मणे नमः। ॐअग्नये नमः। ॐपृथिव्यै नमः। ॐओषधिभ्यो नमः । ॐवाचे नमः। ॐवाचस्पतये नमः। ॐमहद्भ्यो नमः । ॐविष्णवे नमः । ॐअद्भ्यो नमः। ॐअपाम्पतये नमः। ॐवरुणाय नमः ।**

### समर्पणम्-

ॐ अनेन यथाशक्तिकृतेन देवर्षिमनुष्यपितृतर्पणाख्येन कर्मणा भगवान् पितृस्वरूपी-जनार्दन-वासुदेवः प्रीयतां न मम। ॐ तत्सद् ब्रह्मार्पणमस्तु । ततः प्रार्थनामन्त्रः-

**ॐ नमस्ते विष्णुरूपाय नमस्ते ब्रह्मरूपिणे। सहस्त्ररश्मये नित्यं नमस्ते सर्वतेजसे।।**
**नमस्ते रुद्रवपुषे नमस्ते भक्तवत्सले। जगत्स्वामिन्नमस्तेऽस्तु दिव्यचन्दनरूपधृक्।।**
**पद्मनाभ! नमस्तेऽस्तु कुण्डलाङ्गदभूषित!। नमस्ते सर्वलोकेश! सुप्तानां सप्रबोधक!।।**
**सत्यदेव! नमस्तेऽस्तु प्रसीद मम भास्कर!। दिवाकर! नमस्तेऽस्तु प्रभाकर! नमोऽस्तुते।।**
**ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्यजातः पतिरेकऽआसीत्।**
**सदाधारपृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम।।**
**प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेष यत् । स्मरणादेव तद्विष्णोः सम्पूर्ण स्यादिति श्रुतिः।।**
**यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु। न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युताम्।।**
**यत्पादपङ्कजस्मरणात् यस्य नामजपादपि। न्यूनं कर्म भवेत् पूर्णं तं वन्दे साम्बमीश्वरम॥**
**ॐ विष्णवे नमः। ॐ विष्णवे नमः। ॐ विष्णवे नमः।**
**।। ततो विसर्जनम् ।। ।। इति तर्पण-विधिः।।**

पितृदोषविमुक्तये प्रत्यहं पितृतर्पणं कर्तव्यम्। अथवा वर्षे आश्विनकृष्णपक्षे आवश्यमेव पितृतर्पणं विधेयम्। अनेन सन्तुष्टा पितरः सुखं शान्तिं समृद्धिञ्च प्रयच्छन्ति। तथा अतर्पिताः पितरः शरीरात् रुधिरं पिबन्ति।

### अथ पुरश्चरणविचारः

**तत्रादौ पुरश्चरणे स्थलनिर्णयः -**

**पर्वताग्रे नदीतीरे बिल्वमूले जलाशये। गोष्ठे देवालयेऽश्वत्थे उद्याने तुलसीवने ।।**
**पुण्यक्षेत्रे गुरोः पार्श्वे चित्तैकाग्र्यस्थलेऽपि च । पुरश्चरणकृन्मन्त्री सिद्धत्येव विशेषतः ।।**
**काशीपुरी च केदारो महाकालोऽथ नासिकम् । त्र्यम्बकञ्च महाक्षेत्रं पञ्च द्वीपा इमे भुवि ।।**
**यज्ञागारे गवां गोष्ठे देवतायतनेषु च । पुण्यस्थानेषु सर्वेषु गङ्गातीरे विशेषतः ।।**

अर्थात् ऊपर्युक्तस्थलेषु कृतं पुरश्चरणम् अनुष्ठानादिकं सिद्धिदं पुष्कलफलदायकञ्च भवति। अतः ग्रहाणां सर्वदोषोपद्रवशान्तये ऊपर्युक्तस्थलेषु मध्ये कतमस्मिन् स्थले अनुष्ठानादिकं विधेयमिति विशेषः ।

**अथ पुरश्चरणे कालनिर्णयः -**

**ज्येष्ठाषाढौ भाद्रपदं पौषञ्च मलमासकम् । गुरुभार्गवमौढ्यादि वर्जयेच्च प्रयत्नतः ।।**
**अङ्गारशनिवारञ्च व्यतिपातञ्च वैधृतीम् । अष्टमीं नवमीं षष्ठीं चतुर्थीञ्च त्रयोदशीम् ।।**
**चतुर्दशीममावाश्यां प्रदोषञ्च तथा निशाम् । यामाग्निरुद्रसर्पेन्द्रवसुश्रवणजन्मभम् ।।**
**मेष-कर्क-तुला-कुम्भ-मकरालिकलग्नकम्। सर्वाण्येतानि वर्ज्यानि पुरश्चरणकर्मणि ।।**
**चन्द्रतारानुकूल्ये च शुक्लपक्षे विशेषतः । पुरश्चरणकं कुर्यान्मन्त्रसिद्धिः प्रजायते ।।**

**अपि च -**

**यदा वा जायते श्रद्धा यदा वित्तञ्च पुष्कलम् ।**
**दक्षिणावर्तगे सूर्ये कुर्यान्न तु मलिम्लुचे ।।**

### रोगोपद्रवोपशान्त्यर्थं केचन विचाराः-

रोगानां त्रिविधत्वं शास्त्रेषु उपलभ्यन्ते। यथा कर्मजा रोगाः, दोषोद्भवाः रोगाः, कर्मदोषोद्भवाश्च रोगाः। यदा औषधादिभक्षणेन ये रोगाः न शम्यन्ति तेषामुपशमनं धर्माचरण-दान-जप-होमार्चनादिभिः सम्भवतीति शास्त्रकाराणामभिमतम्। तद्यथा -

**रोगाः कर्मोद्भवाः केचित् केचिद्दोषसमुद्भवाः। कर्मदोषोद्भवाः केचित् एवं रोगास्त्रिधा स्मृताः ।।**
**ये रोगाः नैव शम्यन्ति कृते ह्यौषधकर्मणि । धर्मेणैवोपशाम्यन्ति ते रोगाः कर्मजाः स्मृताः।।**
**प्रायश्चित्तेऽपि विहिते न शाम्यति विनौषधम् । ये दृष्टहेतुसम्भूतास्ते रोगाः दोषजाः स्मृताः।।**
**येषां सर्वात्मना हानिर्भवेत्पुण्यैर्न केवलैः। न केवलौषधैर्वापि रोगास्ते कर्मदोषजा ।।**
**पूर्वजन्मकृतं पापं व्याधिरूपेण बाधते। तत्शान्तिरोषधैर्दानैर्जपहोमार्चनादिभिः ।।**
**असाध्यस्यापि रोगस्य प्रायश्चित्तं समाचरेत् । सर्वरोगविनाशाय जपः कार्यो विशेषतः।।**

**।। हरिः ॐ ।।**

**अथ वर्धापन-विधिः**

**तत्रादौ वर्धापनकालनिर्णयो लिख्यते-** वर्धापनं वर्षाभ्यन्तरे प्रतिमासं जन्मतिथौ कर्त्तव्यम्। वर्षानन्तरं प्रतिवर्षं जन्मतिथावेव कर्त्तव्यमिति धर्मशास्त्रीया व्यवस्था। तिथिद्वैधे यत्र जन्मर्क्षयोगः सा एव तिथिर्ग्राह्या। दिनद्वये जन्मनक्षत्रयोगसत्त्वासत्त्वयोरौदयिकी द्विमुहूर्त्ताधिका तिथिरेव ग्राह्या। द्विमुहूर्त्तन्यूनत्वे पूर्वातिथिस्तथा जन्ममासस्य अधिमासत्वे शुद्धमासे प्रत्याब्दिक-वर्धापनविधिः प्रतिपालनीय नत्वधिके मासे इति।

**अथ संक्षेपेण वर्धापनविधिर्लिख्यते।** आयुराभिवृद्ध्यर्थं वर्षप्रवेशतिथौ वर्षवृद्धि-कर्म करिष्ये इति सङ्कल्प्य तिलोद्वर्त्तनपूर्वकं तिलोदकेन स्नात्वा तिलकादिकं विधाय गुरुं सम्पूज्य अक्षतादि-यथोपलब्धसामग्रिभिः निम्नलिखितक्रमेण देवताः प्रपूजयेत्।

तत्रादौ स्वस्त्ययनादिकं विधाय कुलदेवतायै नमः इत्यनेन कुलदेवतामावाह्य ततः जन्मनक्षत्रं-पितरौ-प्रजापतिं-भानुं-विघ्नेशं-मार्कण्डेयं-व्यासं-जामदग्न्यरामं-अश्वत्थामानं-कृपं-बलिं-प्रहलादं-हनुमन्तं-बिभीषणं-षष्ठीञ्च नाम्नैव आवाह्य प्रपूजयेत्। पूजनं पञ्चोपचारेण षोडशोपचारेण वा कर्त्तव्यम्। तद्यथा-

**आवाहनम्-** लौकिकम् : आगच्छन्तु सुरश्रेष्ठ ! भवन्तवत्र स्थिराः समे ।
यावत्पूजां करिष्यामि तावत्तिष्ठन्तु सन्निधौ ।।
वैदिकम्-ः ॐसहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात् ।
सभूमिँ सर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ।। आवाहनार्थं पुष्पं सम०।
देव्याः- ॐ अम्बेऽअम्बिकेऽम्बालिके न मा नयति कश्चन ।
ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम्।। आवाहनार्थं पुष्पाक्षतान् सम०।
आसनम्- लौ. ः अनेकरत्नसंयुक्तं नानामणिगणान्वितम् ।
इमं हेममयं दिव्यमासनं प्रतिगृह्यताम् ।। पुष्पासनं सम०।।
(वै.) ः ॐ पुरुषऽएवेदँ सर्वं यद् भूतं यच्च भाव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ।।
प्रतिष्ठा -(लौ.) अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च ।
अस्यै देवत्वमर्चायै मामहेति च कश्चन।। प्राणप्रतिष्ठापूर्वकं नमस्करोमि।
(वै.) ः ॐमनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञँ समिमं दधातु। विश्वेदेवास इहमादयन्तामोँ ३ प्रतिष्ठ ।।

पाद्यम्- (लौ.)ः ॐ गङ्गोदकं निर्मलञ्च सर्वसौगन्ध्य संयुतम् ।
पादप्रक्षालनार्थाय दत्तं ते प्रतिगृह्यताम् ।।
(वै.)ः ॐएतावानस्य महिमातोज्यायाँश्च पुरुषः ।
पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि ।। पाद्यं सम०।।
अर्घ्यम्- (लौ.)ः गन्धपुष्पाक्षतैर्युक्तं मध्ये सम्पादितं मया ।
गृहाण भगवन् देव ! प्रसन्नो वरदो भव ।।
(वै.) ः ॐ त्रिपादूर्ध्वऽउदैत्पुरुषः पादोऽस्येहाभवत्पुनः ।
ततो विष्वङ्व्यक्रामत्साशनानशनेऽअभि ।। अर्घ्यं सम०।।
आचमनम्- (लौ.) : कर्पूरेण सुगन्धेन वासितं स्वादु-शीतलम् ।
तोयमाचमनीयार्थं गृहाण परमेश्वर ।।
(वै.) ः ॐ ततोव्विराडजायत व्विराजोऽअधिपूरुषः ।
सजातोऽअत्यरिच्यत पश्चाद्भूमिमथो पुरः ।। आचमनीयं जलं सम०।
जलस्नानम्- (लौ.) मन्दाकिन्यास्तु यद्वारि सर्वपापहरं शुभम् ।
तदिदं कल्पितं देव स्नानार्थं प्रतिगृह्यताम् ।।
(वै.) ः ॐ तस्माद्यज्ञात्सर्वहुतः सम्भृतं पृषदाज्यम् ।
पशूस्ताँश्चक्रे वायव्या नारण्या ग्राम्याश्च ये ।। स्नानीयं जलं सम०।
दुग्धस्नानम्- (लौ.)ः कामधेनुसमुद्भूतं सर्वेषां जीवनं परम् ।
पावनं यज्ञहेतुश्च पयः स्नानार्थमर्पितम् ।।
(वै.)ः ॐ पयः पृथिव्यां पयऽओषधीषु पयो दिव्यन्तरिक्षे पयोधाः।
पयस्वतीः प्रदिशः सन्तु मह्यम् ।। पयः स्नानं सम०।
दधिस्नानम्-(लौ.) : पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम् ।
दध्यानीतं मया देव ! स्नानार्थं प्रतिगृह्यताम् ।।
(वै.) ः ॐ दधिक्राब्णोऽअकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभि नो मुखाकरत्प्रणऽआयूँ षितारिषत् । दधिस्नानं सम०।

घृतस्नानम्- (लौ.) : नवनीतं समुत्पन्नं सर्वसन्तोषकारकम् ।
घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम् ।।
(वै.) : ॐ घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतं वस्य धाम ।
अनुष्वधमा वह मादयस्व स्वाहा कृतं वृषभवक्षि हव्यम् ।। घृतस्नानं सम०।
मधुस्नानम् (लौ.): पुष्परेणुसमुद्भूतं सुस्वादु मधुरं मधु ।
तेजः पुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम् ।।
(वै): ॐ मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः ।
माध्वीर्न्नः सन्त्वोषधीः । मधु नक्तमुतोषसो मधुमत्पार्थिवँ रजः ।
मधुद्यौरस्तु नः पिता। मधुमान्नो वनस्पतिर्म्मधुमाँ२ऽअस्तु सूर्यः माध्वीर्गावो भवन्तु नः ।। मधुस्नानं समर्पयामि ।
शर्करास्नानम् (लौ.) : इक्षुरससमुद्भूतां शर्करां पुष्टिदां शुभाम् ।
मलापहारिकां दिव्यां स्नानार्थं प्रतिगृह्यताम् ।
(वै.) : ॐ अपाँ रसमुद्वयसँ सूर्ये सन्तँ समाहितम्। अपाँ रसस्य योरसस्तंवो गृह्णाम्युतममुपयाम गृहीतोसीन्द्रायत्वा जुष्टङ् गृह्णाम्येष ते योनि-रिन्द्राय त्वा जुष्टतमम्। शर्करास्नानं समर्पयामि ।
पञ्चामृतस्नानम्- (लौ.) : पयो दधि घृतं चैव मधु च शर्करान्वितम् ।
पञ्चामृतं मयाऽऽनीतं स्नानार्थं प्रतिगृह्यताम् ।।
(वै.) ॐ पञ्चनद्यः सरस्वतीमपियन्ति सस्रोतसः।
सरस्वती तु पञ्चधासो देशेऽभवत्सरित् ।। पञ्चामृतस्नानं सम ० ।
शुद्धोदकस्नानम्- (लौ.) : शुद्धं यत्सलिलं दिव्यं गंगाजलसमं स्मृतम् ।
समर्पितं मया भक्त्या शुद्धस्नानाय गृह्यताम्।। स्नानार्थं शुद्धोदकं सम०।
(वै.) ॐ शुद्धवालः सर्वशुद्धवालो मणिवालस्तऽआश्विनाः श्येतः श्येताक्षो रुणस्ते रुद्राय पशुपतये कर्णा यामा अवालिप्ता रौद्रा नभो रूपाः पार्जन्याः। स्नानार्थं शुद्धोदकं सम०।
वस्त्रम्- (लौ.) : शीतवातोष्णसंत्राणं लज्जाया रक्षणं परम् ।
देहालङ्करणं वस्त्रमतः शान्तिं प्रयच्छ मे ।।
(वै.) : ॐ तस्माद्यज्ञात् सर्व्वहुतऋच सामानिजज्ञिरे ।
छन्दाँसि जज्ञिरे तस्माद्यजुस्तस्मादजायत । वस्त्रोपवस्त्रञ्च सम०।
यज्ञोपवीतम्- (लौ.): यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् ।
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ।।
(वै.) : ॐ तस्मादश्वाऽअजायन्त ये के चोभयादतः।
गावो ह जज्ञिरे तस्मात्तस्माज्जाताऽअजावयः ।। यज्ञोपवीतं सम०।
चन्दनम्- (लौ.): श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् ।
विलेपनं सुरश्रेष्ठ ! चन्दनं प्रतिगृह्यताम् ।।
(वै.) : ॐ त्वां गन्धर्वा अखनँस्त्वामिन्द्रस्त्वां बृहस्पतिः ।
त्वामोषधे सोमोराजा विद्वान्यक्ष्मादमुच्यत ।। चन्दनं सम०।
अक्षतम्- (लौ.): अक्षताश्च सुरश्रेष्ठ! कुङ्कुमाक्ताः सुशोभिताः ।
मया निवेदिता भक्त्या गृहाण परमेश्वर ।।
(वै.) : ॐ अक्षन्नमीमदन्तह्यवप्रियाऽअधूषत ।
अस्तोषत स्वभानवो विप्रानविष्ठया मतीयोजान्विन्द्रते हरी। अक्षतं सम०।
पुष्पाणि-(लौ.) : ॐमाल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो ।
मयानीतानि पुष्पाणि गृहाण परमेश्वर! ।।
(वै.) : ॐयत्पुरुषं व्यदधुः कतिधाव्यकल्पयन् ।
मुखङ्किमस्यासीत्किम्बाहूकिमूरूपादा उच्येते ।। पुष्पाणि सम०।
पुष्पमाला-(लौ.): ॐमाल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो ।
मयानीतानि पुष्पाणि गृहाण परमेश्वर ! ।।
(वै.) : ॐ ओषधीः प्रतिमोदध्वं पुष्पवतीः प्रसूवरीः ।
अश्वा इव सजित्वरी र्व्वीरुधः पारयिष्ण्वः।। ॐपुष्पमालां सम०।
दूर्वा- (लौ.) : ॐदूर्वाङ्कुरान् सुहरितानमृतान् मङ्गलप्रदान् ।
आनीतांस्तव पूजार्थं गृहाण परमेश्वर ! ।।
(वै.) : ॐकाण्डात्काण्डाप्ररोहन्ती परुषः परुषस्परि ।
एवानो दूर्वे प्रतनुसहस्रेण शतेन च ।। ॐदूर्वादलं सम०।

धूपः - (लौ.) : ॐवनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ।।
(वै.) : ॐ ब्राह्मणोऽस्यमुखमासीद् बाहूराजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्याँ शूद्रोऽअजायत ।। धूपमाघ्रापयामि।
दीपः-(लौ.) : ॐ साज्यञ्च वर्त्तिसंयुक्तं वह्निना योजितं मया ।
दीपं गृहाण देवेश त्रैलोक्यतिमिरापहम् ।।
(वै.) : ॐचन्द्रमा मनसो जातश्चक्षोः सूर्य्योऽअजायत ।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत।। ॐदीपं दर्शयामि।
नैवेद्यम्-(लौ.) : ॐशर्कराखण्डखाद्यानि दधिक्षीरघृतानि च ।
आहारं भक्ष्यभोज्यञ्च नैवेद्यं प्रतिगृह्यताम् ।।
(वै.) : ॐ नाभ्या आसीदन्तरिक्षँ शीर्ष्णो द्यौः समवर्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ२ऽअकल्पयन्।। ॐनैवेद्यं निवेदयामि।
ऋतुफलम्-(लौ.): ॐ इदं फलं मया देव! स्थापितं पुरतस्तव ।
तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ।।
(वै.) : ॐयाः फलिनीर्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः।
बृहस्पति प्रसूतास्तानो मुञ्चन्त्वँ हसः।। ऋतुफलं सम०।
ताम्बूलम्- (लौ.) : ॐपूगीफलं महद् दिव्यं नागवल्लीदलैर्युतम् ।
एलालवङ्गसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ।।
(वै.) : ॐयत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तोऽस्यासीदाज्यं ग्रीष्मऽइध्मः शरद्धविः ।। ताम्बूलं सम०।
दक्षिणा- (लौ.):ॐहिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ।।
(वै.): ॐहिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेकऽआसीत्।
सदाधारपृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम।। दक्षिणाद्रव्यं सम०।
मन्त्रपुष्पाञ्जलिः (लौ) : ॐ श्रद्धया सिक्तया भक्त्या हार्दप्रेम्णा समर्पितः ।
मत्रपुष्पाञ्जलिश्चायं कृपया प्रतिगृह्यताम् ।।

(वै.) **ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।**
**तेहनाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ।।** मन्त्रपुष्पाञ्जलिं सम०।
षष्ठ्यै दधिभक्तनैवेद्यं समर्पयेत्। पूजान्ते प्रार्थना -

**चिरञ्जीवी यथा त्वं भो ! भविष्यामि तथा मुने ।**
**रूपवान्वित्तवांश्चैव श्रियायुक्तश्च सर्वदा ।।**
**मार्कण्डेयनमस्तेऽस्तु सप्तकल्पान्तजीवन ।**
**आयुरारोग्यसिद्ध्यर्थं प्रसीद भगवन् मुने ।।**
**चिरञ्जीवी यथा त्वं तु मुनीनां प्रवरो द्विज ! ।**
**कुरुष्व मुनिशार्दूल ! तथा मां चिरजीविनम् ।।**
**मार्कण्डेयमहाभाग ! सप्तकल्पान्तजीवन ।**
**आयुरारोग्यसिद्ध्यर्थमस्माकं वरदो भव ।।**

**अथ षष्ठीप्रार्थना -**

**जय देवि ! जगन्मातर्जगदानन्दकारिणि ।**
**प्रसीद मम कल्याणि नमस्ते षष्ठीदेवते ।।**
**त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च ।**
**ब्रह्मविष्णुशिवैः सार्धं रक्षां कुर्वन्तु तानिमे ।।**

ततस्तिलगुडमिश्रं पयः पिबेत् । तन्मन्त्रः-

**सतिलंगुडसंमिश्रमञ्जल्यर्धमितं पयः ।**
**मार्कण्डेयाद्वरं लब्ध्वा पिबाम्यायुर्विवृद्धये ।।**

क्वचित् पूजितषोडशदेवताभ्यो नाम्ना प्रत्येकमष्टाविंशतिसंख्यकतिलहोमस्यापि विधानं प्राप्यते। तदनन्तरमावाहितदेवानां विसर्जनं, यज्ञाचार्यादाशीर्वादग्रहणम्। ततो यथेष्टं विप्रभोजनं, तेभ्यो दक्षिणादानञ्च दद्यादिति संक्षेपेण वर्धापनविधिः प्रदर्शितः ।

जन्मदिवसे पालनीयाः केचन नियमाः-

**खण्डनं नखकेशानां मैथुनाध्वगमौ तथा ।**
**आमिषं कलहं हिंसां वर्षवृद्धौ विवर्जयेत् ।।**
**मृते जन्मनि सङ्क्रान्तौ श्राद्धे जन्मदिने तथा ।**
**अस्पृश्यस्पर्शने चैव नस्नायादुष्णवारिणा ।।**

।। हरिः ॐ ।।

## अथ काकविष्ठापतन-शान्तिविचारः-

आश्रयस्थो यदा काको विष्ठां सम्पद्यते यदि।
क्षीरवृक्षसमारूढस्तस्य सिद्धिरनेकधा।।१।।
शुष्कवृक्षसमारूढो विष्ठां सम्पद्यते यदा।
तस्य लक्ष्मीः क्षयं याति त्रिभिर्मासैर्न संशयः।।२।।
निरालम्बो[1] यदा काको विष्ठां सम्पद्यते यदि।
शिरसि पतति यस्य षण्मासस्तस्य मृत्युदः।।३।।
स्कन्धे वा यदि वा पृष्ठे विष्ठा पतति यस्य चेत्।
भ्रातृकष्टं भवेत्तस्य अथवा देहनाशनम्।।४।।
बाह्वोः पतति विष्ठा तु मित्रनाशो भवेत्तदा।
कुक्षौ पुत्रान्निहन्त्याशु उदरे रोगमादिशेत्।।५।।
गुह्ये पतति यस्यैव पुत्रनाशो भवेत्तदा।
ऊरुषु जानुनोर्यस्य काकविष्ठा प्रपद्यते।।६।।
तद्वाहनस्य नाशः स्याद्भयं राज्ञः सकाशतः।
चरणे प्रपतेद्यस्य देशत्यागो भवेत्तदा ।।७।।
निरालम्बो यदा काको विष्ठां श्वेतां करोति चेत्।
उत्तरतः पूर्वमायाति शत्रुनाशो भवेत्तदा।।८।।
याम्याः परां दिशि याति कृष्णां विष्ठां प्रपद्यते।
अब्दाभ्यन्तरतो मृत्युः सर्वनाशो भवेत्तदा।।९।।
यस्याङ्गे प्रपतेद्विष्ठा सचैलं स्नानमाचरेत्।
वस्त्रत्यागो भवेत्तस्य सद्यः शक्तिं करोति सः।।१०।।
धेनुरेका च दातव्या सर्वालङ्कारशोभिता।
पञ्चरत्नं च दातव्यं दक्षिणा चापि शक्तितः।।११।।
सतिलैर्मधुभिर्होमो ह्यष्टोत्तरशतं चरेत्।।

1. उड्डीयमानः आधाररहितः काकः।

## अथ काकविष्ठाशान्तिप्रयोगः-

ॐअद्येत्यादि अमुकगोत्रः अमुकशर्म्माहं मम अमुकाङ्गे काकविष्ठा-पतनजनित-दुष्टदोषोपशान्त्यर्थं सचैलस्नानं करिष्ये तथा स्वस्तिवाचनादिपूर्वकं गणेशादि-षोडशमातृकापूजनं, कलशपूजनं, नवग्रहपूजनं च करिष्ये।

ततः सचैलं स्नात्वा स्नानवस्त्राणि परित्यज्य अन्यवासः परिधाय पूर्वोक्तेन विधिना स्वस्तिवाचनादि पूर्वाङ्गपूजनं विधाय (रक्षाविधानं कृत्वा) वेद्यां पञ्चभूसंस्कारपूर्वकम् अग्निं प्रतिष्ठाप्य वरदनामाग्निम् आवाह्य, ब्रह्मोपवेशनादि-पर्युक्षणान्तं कर्म कृत्वा आज्येन आघाराज्याहुतिः हुत्वा (मधु-तिल-सर्पिभिः अष्टोत्तरशतम्, काकविष्ठाशान्तिमन्त्रेण जुहुयात्)। तद्यथा-

**काकविष्ठा-शान्तिमन्त्रः** - ॐ हिरीटि भिरीटि काकचाण्डालाय स्वाहा। अनेन मन्त्रेण १०८ जुहुयात्। पुनः नाममन्त्रेण (काकाय स्वाहा इति नाममन्त्रेण) दिक् १० आहुतिं कुर्यात्।। ॐ अंशुभ्यो नमः स्वाहा अनेन १०, ॐ श्वपचेभ्यो नमः स्वाहा १०, ॐ वायसेभ्यो नमः स्वाहा १०, ॐ पतङ्गेभ्यो नमः स्वाहा १०, ॐ पापरोगिभ्यो नमः स्वाहा १० आहुतिं कुर्यात्। उत्तरतन्त्रं समाप्य स्वशक्त्या दक्षिणाञ्च दद्यात्। तिलपात्रदानविधिना तिलपात्रदानं कुर्यात्।

**माषान्नदानम्-** ॐ अद्येत्यादि अमुकगोत्रः अमुकराशिः अमुकशर्माऽहं मम अमुक अङ्गे काकविष्ठापतन-शान्तिनिमित्तक-दुष्टदोषोपशान्तये च इदं सद्रव्यं माषान्नम् अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे।

प्रार्थना- **यस्मान्मधुवधे काले विष्णुदेहसमुद्भवाः।**
**पितॄणां तृप्तिदा माषा अतः शान्तिं प्रयच्छ मे।।**

यदि शक्तः स्यात्तदा सप्तशतीपाठं कुर्यात्। जलजन्तुभ्योऽन्नं दद्यात्। अभिषेकमन्त्रेण कलशोदकैर्यजमानस्य मार्जनं कृत्वा-रक्षाबन्धन-तिलकमन्त्रपाठादि समापयेत्। ततः ब्राह्मणेभ्यः भोजनं दक्षिणादानं च कुर्यात्। एवं कृते तद्दोषपरिहारो भवति।

**।। इति काकविष्ठापतनशान्तिः।।**

## केचन मन्त्रप्रयोगाः –

### तत्रादौ विद्यावर्धकमन्त्रप्रयोगः- (1)-

**ॐ नमो ॐ ह्रीं श्रीं क्लीं वद वद वाग्वादिनी बुद्धिं वर्धय ॐ ह्रीं नमः स्वाहा ।।**

मन्त्रस्यास्य अष्टोत्तरसहस्रसंख्यकजपः ग्रहणावसरे क्रियते तदा अयं सिद्धो भवति। तदनन्तरं अष्टोत्तरशतं प्रतिदिनं जपः कर्त्तव्यः । अनेन अनुदिनमभ्यस्ता विद्या वृद्धिं गच्छति ।

### विद्यावर्धकमन्त्रप्रयोगः- (2)

**ॐ ह्रीं श्रीं माम वद वद वाग्वादिनी भगवती सरस्वती ऐं नमः स्वविद्यां देहि मम ह्रीं सरस्वती स्वाहा।।**

मन्त्रस्यास्य अष्टोत्तरसहस्रसंख्यकजपः ग्रहणावसरे कर्त्तव्यः। तदनन्तरं एकविंशतिदिनं यावत् त्रिकालं अष्टोत्तरशतसंख्यक सश्रद्धं जपः कर्त्तव्यः। ततोऽनुदिनं अष्टोत्तरशतसंख्यकजपकर्म विद्याविवृद्धये सिद्धिदायकं भवति ।

### धनवर्धकमन्त्रप्रयोगः- (3)

**ॐ ह्रीं श्रीं क्रीं श्रीं क्रीं क्लीं श्रीं लक्ष्मी मम गृहे धनं पूरय पूरय चिन्तां दूरय दूरय स्वाहा।**

मन्त्रस्यास्य अष्टोत्तरसहस्रसंख्यकजपः चतुर्विंशति दिनं यावत् क्रियते तदा मन्त्रोऽयं सिद्धिं गच्छति। तदनन्तरमनुदिनं धनविवृद्धये मालात्रयं जपः कर्त्तव्यः। सात्विकाचरणेन सह अस्य प्रयोगः कर्त्तव्यः ।

### पत्निप्राप्त्यर्थं वैदिकमन्त्रप्रयोगः- (4)

**ॐआगच्छत आगतस्य नाम गृह्णाम्यायतः। इन्द्रस्य वृत्रघ्नो वन्वे वासवस्य शतक्रतोः।।**
**येन सूर्यां सावित्रीमश्विनोहतुः पथा। तेन मामब्रवीद् भगो जायामा वहतादिति।।**
**यस्तेऽङ्कुशो वसुदानो बृहन्निन्द्र हिरण्ययः । तेना जनीयते जायां मह्यं धेहि शचिपते।।**

अथर्ववेदे अष्टमेऽनुवाके 6/82/1,2,3 ।

अस्य चतुःपञ्चाशतसहस्रजपेन तद्दशांशहवनतर्पणमार्जनेन मनोनुकूला पत्निप्राप्तिर्भवति।

### पत्नीप्राप्त्ये पौराणिकमन्त्रप्रयोगः- (5)

**ॐ पत्नीं मनोरमां देहि मनोवृत्तानुसारिणीम् । तारिणीं दुर्गसंसारसागरस्य कुलोद्भवाम् ।।**

मन्त्रस्यास्य "दुर्गासप्तशती'' मन्त्रैः सम्पुटितैः पाठैः मनोनुकूलापत्नी प्राप्यते। पाठसंख्या-निर्द्धारणं जातकस्य जन्मपत्रस्थपत्नीसुखबाधकग्रहोपरि आधरितमस्ति ।

### मनोनुकूलपतिप्राप्तये वैदिकमन्त्रप्रयोगः- (6)

**ॐ त्र्यम्बकं यजामहे सुगन्धिम्पतिवेदनम् । ऊर्वारुकमिवबन्धनादितोमुक्षीयमामुतः ।।**

अस्य मन्त्रस्यानुष्ठानेन (सश्रद्धं शिवार्चनेन रुद्राभिषेकेन च) प्राप्ते काले मनोनुकूलपतिप्राप्तिर्भवति।

### मनोनुकूलपतिप्राप्तये पौराणिकमन्त्रप्रयोगः- (7)

**ॐ कात्यायिनि! महामाये ! महायोगिन्यधीश्वरि !**
**नन्दगोपसुतं देवि ! पतिं मे कुरु ते नमः ।।**

अस्य मन्त्रस्यानुष्ठाने भगवत्याः जगदम्बायाः सम्मुखं दीपं प्रज्वाल्य कमलाक्षमालया एकपञ्चाशतसहस्रसंख्यकं जपकर्म कर्त्तव्यम्। तदनन्तरं तद्दशांशहवनं-मार्जनं-ब्राह्मणभोजनं-दक्षिणादानञ्च मनोनुकूलपतिप्राप्तये कर्त्तव्यम्।

### कुपथगामी पति/पत्नीवशीकरणमन्त्रप्रयोगः- (8)

**ॐ कामातुरे काममेखले विद्योषिणि नीललोचने ।**
**अमुकं मे वश्यं कुरु कुरु ह्रीं स्वाहा ।।**

अत्र अमुकस्थाने पत्न्या वा पत्युर्नामोल्लेखः कर्त्तव्यः । सुमुहूर्त्ते प्रारभ्य चतुर्विंशति-सहस्रसंख्यकं जपकर्म भगवतीं पञ्चोपचारैः प्रपूज्य कर्त्तव्यम् ।

### कुपथगामी पति/पत्नीवशीकरणवैदिकमन्त्रप्रयोगः- (9)

**ॐ यथा नकुलो विच्छिद्य संदधात्यहिं पुनः ।**
**एवा कामस्य विच्छिन्नं सन्धेहि वीर्यावति ।।**

अस्य जपसंख्या चतुर्विंशतिसहस्रमस्ति। विधानं विमृश्य कर्त्तव्यम्।

### ।। अथशारदोक्तमहामृत्युञ्जयजपविधिः।।

ॐ अस्य श्रीमहामृत्युञ्जयमन्त्रस्य वसिष्टऋषिः अनुष्टुप्छन्दः श्रीत्र्यम्बकरुद्रो देवता श्रीं बीजं ह्रीं शक्तिः मम यजमानस्य वा शरीरे सर्वारिष्ट निवृत्तिपूर्वकसकलमनोरथसिद्ध्यर्थे जपे विनियोगः ।

**अथ ऋष्यादिन्यासः**

ॐ वसिष्ठऋषये नमः शिरसि। अनुष्टुप्छन्दसे नमः मुखे। श्रीत्र्यम्बकरुद्र देवतायै नमः हृदये। श्रीं बीजाय नमः गुह्ये। ह्रीं शक्तये नमः पादयोः।।

**अथ करन्यासः**

ॐहौं ॐजूं सः भूर्भुवः स्वः त्र्यम्बकं ॐनमो भगवते रुद्राय शूलपाणये स्वाहा अङ्गुष्ठाभ्यां नमः।

ॐ हौं ॐ जूं सः भूर्भुवः स्वः यजामहे ॐ नमो भगवते रुद्राय अमृतमूर्तये मां जीवय जीवय तर्जनीभ्यां स्वाहा ।

ॐ हीं ॐ जूं सः भूर्भुवः स्वः सुगन्धिम्पुष्टिवर्धनम् ॐ नमो भगवते रुद्राय चन्द्रशिरसे जटिने स्वाहा मध्यमाभ्यां वषट्।

ॐ हौं ॐ जूं सः भूर्भुवः स्वः उर्वारुकमिव बन्धनात् ॐ नमो भगवते रुद्राय त्रिपुरान्तकाय हां ह्रीं अनामिकाभ्यां हुम्।

ॐ हौं ॐ जूं सः भूर्भुवः स्वः मृत्योर्मुक्षीय ॐ नमो भगवते रुद्राय त्रिलोचनाय ऋग्यजुः साममन्त्राय कनिष्ठिकाभ्यां वौषट् ।

ॐ हौं ॐ जूं सः भूर्भुवः स्वः मामृतात् ॐ नमो भगवते रुद्राय अग्नित्रयाय ज्वल ज्वल मां रक्ष रक्ष अघोरास्त्राय करतलकरपृष्ठाभ्यां फट् ।

**एवं हृदयादि०**

ॐ हौं ॐ जूं सः भूर्भुवः स्वः त्र्यम्बकं ॐ नमो भगवते रुद्राय शूलपाणये स्वाहा हृदयाय नमः ।

ॐ हौं ॐ जूं सः भूर्भुवः स्वः यजामहे ॐ नमो भगवते रुद्राय अमृतमूर्तये मां जीवय जीवय शिरसे स्वाहा।

ॐ हौं ॐ जूं सः भूर्भुवः स्वः सुगन्धिम्पुष्टिवर्धनम् ॐ नमो भगवते रुद्राय चन्द्रशिरसे जटिने स्वाहा शिखायै वषट्।

ॐ हौं ॐ जूं सः भूर्भुवः स्वः उर्वारुकमिव बन्धनात् ॐ नमो भगवते रुद्राय त्रिपुरान्तकाय ह्रां ह्रीं कवचाय हुँ ।

ॐ हौं ॐ जूं सः भूर्भुवः स्वः मृत्योर्मुक्षीय ॐ नमो भगवते रुद्राय त्रिलोचनाय ऋग्यजुः साममन्त्राय नेत्रत्रयाय वौषट् ।

ॐ हौं ॐ जूं सः भूर्भुवः स्वः मामृतात् ॐ नमो भगवते रुद्राय अग्नित्रयाय ज्वल ज्वल मां रक्ष रक्ष अघोरास्त्राय अस्त्राय फट् ।।

**।। अथ वर्णन्यासः ।।**

ॐ त्र्यं नमः दक्षिणचरणाग्रे। बं नमः कं नमः यं नमः जां नमः दक्षिणचरणसन्धिचतुष्केषु। मं नमः वामचरणाग्रे। हे नमः सं नमः गं नमः धिं नमः वामचरणसन्धिचतुष्केषु। पुं नमः गुह्ये। ष्टिं नमः आधारे। वं नमः जठरे। र्द्धं नमः हृदये। नं नमः कण्ठे। ॐ नमः दक्षिणकराग्रे। उं नमः रुं नमः कं नमः मि नमः दक्षिणकरसन्धिचतुष्केषु। वं नमः वामकराग्रे। वं नमः धं नमः नां नमः मं नमः वामकरसन्धिचतुष्के। त्यो नमः वदने। मुं नमः ओष्ठयोः। क्षीं नमः घ्राणयोः। यं नमः दृशोः। मां नमः श्रवणयोः। मुं नमः भ्रुवोः। तां नमः शिरसि। पदन्यासः। त्र्यम्बकं शिरसि। यजामहे भ्रुवोः। सुगन्धि दृशोः। पुष्टिवर्धनम् मुखे। उर्वारुकं गण्डयोः। इव हृदये। बन्धनात्-जठरे, मृर्त्यो-गुह्ये। मुक्षीय-उर्वोः। मा जानुनोः। अमृतात् पादयोः॥

**अथ ध्यानम्**

हस्ताभ्यां कलशद्वयामृतरसेराप्लवयन्तं शिरो, द्वाभ्यां तो दधतं मृगाऽक्षवलये द्वाभ्यां वहन्तं परम्। अंकन्यस्तकरद्वयामृतघट कैलाशकान्तं शिवम्, स्वच्छाम्भोजगतं नवेन्दुमुकुटाभान्तं त्रिनेत्रं भजे॥१॥

इति ध्यात्वा मानसोपचारैः सम्पूज्य पूर्ववत् मालापूजनं पूर्ववत् मूलमन्त्र जपेत् ।।

**।। मन्त्रस्वरूपम् ।।**

हौं ॐ जूं सः भूर्भुवः स्वः त्र्यम्बकं यजामहे सुगन्धिम्पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्यो-र्मुक्षीय मामृतात् भूर्भुवः स्वरों जूं सः हौं ओम् ॥ १ ॥

**जपान्ते प्रार्थना-**

मृत्युञ्जय! महारुद्र! त्राहि मां शरणागतम् । जन्ममृत्युजरारोगैः पीडितं कर्मबन्धनैः ॥ १॥

तावकस्त्वद्गतप्राणस्त्वच्चित्तोऽहं सदा मृड । इति विज्ञाप्य देवेशं जपेन्मन्त्रं त्र्यम्बकम् ॥ २॥

बालस्य दृष्टिदोषादौ रक्षाविधिः- **भस्म गृहीत्वाऽभिमंत्रयेत् -**

**वासुदेवो जगन्नाथः पूतनातर्जनो हरिः। रक्षंतु त्वरितं बालं मुंच मुंच कुमारकम् ॥**

**कृष्ण रक्ष शिशुं शंखमधुकैटभमर्दन। प्रातः संगवमध्याह्ने सायान्हे मुंच संध्ययोः ॥**

**महानिशि सदा रक्ष कंसारिष्टनिषूदन। महोरगान् पिशाचांश्च ग्रहान्मातृगणांस्तथा ॥**

**बालग्रहान्विशेषेण छिंधि छिंधि महाभयान्। त्राहि त्राहि हरे नित्यं त्वद्रक्षाभूषितं शिशुम्॥**

**इति भस्माभिमंत्र्यैव भूषयेत्तेन भस्मना। शिरो ललाटाद्यंगेषु रक्षां कुर्याद्यथाविधि ॥**

**रक्ष रक्ष महादेव नीलग्रीव जटाधर। ग्रहैस्तु सहितो रक्ष मुंच मुंच कुमारकम् ॥**

अमुं मंत्रं भूर्जपत्रे विलिख्य तत्पत्रं बालस्य दक्षिणभुजे बध्नीयात् ।

**बालरोदनपरिहारार्थं यंत्रमुक्तं मयूखे**

षड्लमध्ये ह्रींकारस्तन्मध्ये शिशोर्नाम विलिख्य षटकोणेषु - ॐ लुलुव स्वाहा' इति मंत्रषडक्षराणि विलिख्य तद्बहिर्नेमिवद्वत्तद्वयं विलिख्य तद्बहिरधोमुखैरर्धचंद्रावेष्टय यंत्रदेवताभ्यो नमः' इति षोडशोपचारैः संपूज्य बालहस्ते बन्धीयात्

(बालग्रहशांत्यादिकं शांत्यादिग्रंथे द्रष्टव्यम्)

इति बालस्य रक्षाविधिः ॥

अथ बगलामुखी मन्त्र जपविधिः(मेरु तंत्रोक्त)

**विनियोगः**

'ॐ अस्य श्रीबगलामुखीमन्त्रस्य नारदऋषिः बृहतीछन्दः बगलामुखीदेवता शत्रूणां स्तम्भनार्थे जपे विनियोगः ।

**षडङ्गन्यासः-**

ॐ ह्रीं हृदयाय नमः, ॐ बगलामुखि शिरसे स्वाहा, ॐ सर्वदुष्टानां शिखायै वषट्, ॐ वाचं मुखं पदं स्तम्भय कवचाय हुम्, ॐ जिहवां कीलय नेत्रत्रयाय वौषट्, ॐ बुद्धिं विनाशय ह्रीं ॐ स्वाहा अस्त्राय फट् ॥

**षडङ्गन्यासः**

ह्रीं हदयाय नमः, ॐ बगलामुखि शिरसे स्वाहा, ॐ सर्वदुष्टानां शिखायै वषट्, ॐ वाचंमुखं पदं स्तम्भय कवचाय हुं, ॐ जिहवां कीलय नेत्रत्रयाय वौषट्, ॐ बुद्धिं विनाशय ह्रीं ॐ स्वाहा अस्त्राय फट्।

**अथ मन्त्रः**

।। **ॐ ह्रीं बगलामुखि सर्वदुष्टानां वाचं मुखं पदं जिह्वां स्तम्भय कीलय बुद्धिं विनाशय ह्रीं ॐ स्वाहाः**।।

## नक्षत्रसम्बन्धिनो वृक्षाः

ज्योतिषशास्त्रं लोकोपकारकं शास्त्रमस्तीत्यत्र नास्ति कश्चित् संशीतिलेशः। जन्मपत्रमाध्यमेन यथा जातकस्य प्रतिकूलतानिवृत्यर्थं तस्य प्रतिकूलग्रहस्य निर्द्धारणं कृत्वा तदनुकूलताप्राप्तये तस्य मन्त्रजपेन, तस्य पदार्थस्य दानेन तस्य ग्रहस्य व्रतेन, हवनादिषु तस्य ग्रहस्य समिधया हवनादिना च तद्ग्रहबाधायाः निवृत्तिः भवति, तथैव् नक्षत्रादीनां शान्तिप्रसङ्गे नक्षत्र-सम्बन्धिवृक्षाणामपि विद्यते किमपि वैशिष्ट्यम् । सुखैश्वर्यादीनां प्राप्तये नक्षत्रसम्बन्धिवृक्षाणां ज्ञानमपि नितान्तम् अपेक्षितं भवति । यतः कश्चिज्जनः स्वजन्मनक्षत्रसम्बन्धिवृक्षाणां सेवनं छेदन-भक्षणादिविधिना करोति तदा सः स्वजीवने सुखैश्वर्यादिकं नैव प्राप्नोति। जन्मनक्षत्रसम्बन्धिनः वृक्षाः सर्वदा पालनीयाः पूजनीयाः संवर्धनीयाश्च भवन्ति। तद्यथा रघुनाथसूरिविरचिते भोजन-कुतुहलाख्ये ग्रन्थे-

**अथ वक्ष्यामि नक्षत्रवृक्षानागमचोदितान् ।**
**पूजनात् पुण्यदांश्चैव वर्धनात् पालनादपि ।।**
**विषद्रुधात्रीतरुहेमदुग्धाजम्बुस्तथा खादिरकृष्णवंशाः ।**
**अश्वत्थनागौ च वटः पलाशः प्लक्षस्तथाम्बष्ठतरुः क्रमेण ।।**
**बिल्वार्जुनौ चैव बिकङ्कतोऽथ सकेसराः शम्बरसर्जवञ्जुलाः ।**
**सपानसार्काश्च शमीकदम्बाः तथाम्रिनम्बौ मधुकद्रुमश्च ।।**
**अमी नक्षत्रदैवत्या वृक्षाः स्युः सप्तविंशतिः ।**
**अश्विन्यादिक्रमादेषामेषा नक्षत्रपद्धतिः ।।**
**यस्त्वेतेषामात्मजन्मर्क्षभाजां मर्त्यः कुर्याद् भेषजादीन् मदान्धः ।**
**तस्यायुष्यं श्रीः कलत्रञ्च पुत्राः नश्यन्त्येषां वर्धते वर्धनाद्यैः ।।**

एतेषाम् अश्विन्यादिसप्तविंशतिनक्षत्रवृक्षाणां देवताः अपि ते एव भवन्ति ये नक्षत्राणां देवताः कथिताः विद्यन्ते । इदानी प्रसङ्गात् नक्षत्रवृक्षाणां तदधिपानाञ्चोल्लेखः क्रियते। तद्यथा-

| क्र. सं. | नक्षत्रनाम | देवताः | वृक्षाः | क्र. सं. | नक्षत्रनाम | देवताः | वृक्षाः |
|---|---|---|---|---|---|---|---|
| १ | **अश्विनी** | अश्विनीकुमार | विषद्रुः | १५. | **स्वातिः** | वायुः | अर्जुनः |
| २ | **भरणी** | यम | धात्री | १६. | **विशाखा** | शक्राग्निः | विकङ्कतः |
| ३ | **कृतिका** | अग्नि | हेमदुग्धा | १७ | **अनुराधा** | मित्र | केसरः |
| ४ | **रोहिणी** | धातृ | जम्बू | १८. | **ज्येष्ठा** | इन्द्र | शम्बरः |
| ५ | **मृगशिरा** | चन्द्रमाः | खादिर | १९. | **मूल** | निऋर्ति | सर्ज |
| ६ | **आर्द्रा** | रुद्रः | कृष्णखादिरः | २०. | **पू.षा.** | क्षीरः | वञ्जुलः |
| ७ | **पुनर्वसु** | अदितिः | वंशः | २१. | **उ.षा.** | विश्वेदेवा | पानकः |
| ८ | **पुष्य** | ईज्यः | अश्वत्थः | २२. | **श्रवणा** | विधिः | अर्कः |
| ९ | **अश्लेषा** | सर्पः | नागः | २३. | **धनिष्ठा** | गोविन्द | शमी |
| १० | **मघा** | पितरः | वटः | २४. | **शतभिषा** | वसु | कदम्बः |
| ११ | **पू.फा.** | भगः | पलाशः | २५. | **पू.भा.प.** | अजचरण सूर्यविशेषः | आम्रः |
| १२ | **उ.फा.** | अर्यमा | प्लक्षः | २६. | **उ.भा.प.** | अहिर्बुध्न्य | निम्बः |
| १३ | **हस्त** | रविः | अम्बष्ठः | २७. | **रेवती** | पूषा | महुआ |
| १४. | **चित्रा** | त्वाष्ट्रा | बिल्वः | | | | |

## गृहस्य चतुर्दिक्षु वृक्षफलम्-

**वृक्षाः दुग्धसकंटकाश्च फलिनस्त्याज्या गृहाद् दूरतः**
**शस्ते चम्पकपाटले च कदली जातीतथा केतकी ।**
**यामादूर्ध्वमशेषवृक्ष सुरजा छाया न शस्ता गृहे**
**पार्श्वे कस्य हरे रवीशपुरतो जैनानु चण्ड्याः क्वचिद् ।।**

वास्तुराजवल्लभ-

अर्थात् दुग्धवाले वृक्ष, काँटेदार वृक्ष, फूलवाले वृक्ष, घर के समीप सुखदायक नहीं माने गये हैं । चम्पा, गुलाब, केला, चमेली, केतकी का वृक्ष शुभदायक माना गया है। एक प्रहर दिन (सूर्योदय के ३ घंटे) के पश्चाद् भी घर पर किसी वृक्ष की छाया शुभदायक नहीं मानी गई है। ब्रह्मा के मंदिर के पार्श्व भाग में, विष्णु, शिव, सूर्य मन्दिर के सामने, जैन-मन्दिर के पीछे किसी भी देवी मन्दिर के किसी भाग में गृह बनाना शुभदायक नहीं माना गया है।

।। हरिः ॐ ।।

# सृष्टि-संरक्षण तथा ग्रहोपचार में वृक्षों का अवदान

**प्रो. मदनमोहनपाठक**
वरिष्ठ आचार्य, ज्योतिषविभाग
केन्द्रीयसंस्कृतविश्वविद्यालय, लखनऊ-परिसर

स्वतन्त्रता प्राप्ति के अनन्तर देश में भौतिक समृद्धि तो हुई परन्तु इसके साथ अशान्ति की भी अभिवृद्धि हुई है। इसके अनेक कारणों में से एक महत्त्वपूर्ण कारण है वृक्षों की कमी। जिस परिमाण में वृक्षों की कटाई हुई है उस परिमाण में वृक्षों को लगाया नहीं गया है। परिणामस्वरूप वर्षा की कमी हुई है। फसलों की सिचाई में मेघ का जल अमृत समान माना गया है। मेघ जल से सिंचित अन्न विविध रोगोपशामक तथा पुष्टि-वर्धक है। पर्यावरण के संरक्षण में भी वृक्षों/वनस्पतियों का महत्त्वपूर्ण स्थान है। विभिन्न कम्पनियों कारखानों, मोटर गाड़ियों से निकलने वाले कार्बन  के अवशोषक के रूप में वृक्षों तथा वनस्पतियों की महती भूमिका है। महानगरों में वायु प्रदूषण चरम पर है। कारण वृक्षों का अभाव ही है।

धर्मार्जन पुरुषार्थ चतुष्टय में प्रथम पुरुषार्थ है। धर्म के विना अर्थ एवं काम अपवित्र हो जाता है। इन वृक्षों के महत्त्व को जानकर ही ऋषियों ने वृक्षारोपण को धर्मं के साथ जोड़ा था। वाराहपुराण में व्यास जी ने कहा है-

**भूमिदानेन ये लोका गोदानेन च कीर्तिता।**
**ते लोकाः प्राप्यते पुंभिः पादपानां प्ररोपणे।।**

अर्थात् व्यक्ति को भूमिदान तथा गोदान के सदृश पुण्य वृक्ष लगाने से प्राप्त होता है। वृक्ष रोपण करने वाला नरक गामी नहीं होता।

**अश्वत्थमेकं पिचुमर्दमेकं (निम्ब)न्यग्रोध (वट)मेकं दश पुष्पजाती।**
**द्वे द्वे तथा दाड़िममातुलुंगे <u>पञ्चाम्ररोपी नरकं न याति</u>।।**

अर्थात् एक पीपल, एक निम्ब, एक वरगद, दश पुष्पजाती, दो अनार, दो मातुलुंगा (एकप्रकार का निम्बू, Sitron) तथा पांच आम्रका पेड लगाने वाला कभी नरक नहीं जाता।

**यथा सत्पुत्रः कुलमुद्धरेद्धि यथातिकृत्स्नानियमप्रयत्नात्।**
**तथात्रवृक्षाः फलपुष्पभूताः <u>स्वं स्वामिनं नरकादुद्धरन्ति</u>।।**

अर्थात् जैसे सत्पुत्र अपने कुल का उद्धार करता है, उसी प्रकार फल-पुष्प युक्त वृक्ष अपने स्वामी को नरक से उद्धार कर देता है।

**वृक्षरोपण फल-** **अपुत्रस्य च पुत्रत्वं पादपा इह कुर्वते।**
**यत्नेनापि च राजेन्द्र! अश्वत्थारोपणं कुरु।।**
**स ते पुत्रसहस्राणां कार्यमेकः करिष्यति।**
**धनी चाश्वत्थवृक्षेण अशोकः शोकनाशनः।।**
**प्लक्षो यज्ञप्रदः प्रोक्तो निम्बश्चासुप्रदः स्मृतः।**
**जम्बुकी नाकदा प्रोक्ता मर्यादा दाडिमी तथा।।**
**डुम्बरो रोगनाशाय पलाशो ब्रह्मदस्तथा।।**
**अर्कपुष्पा रोपकाणां नित्यं तुष्येद्दिवाकरः।।**
**श्रीवृक्षः शंकरो देवः पाटलायान्तु पार्वती।**
**शिंशपायामप्सरसः कुन्दे गन्धर्वसत्तमाः।।**
**विभितके दासवृद्धिः वकुलो दास्यदस्तथा।**
**अपत्यनाशकस्तालो वकुलः कुलवर्द्धनः।।**
**बहुभार्या नारिकेली द्राक्षः सर्वाङ्गसुन्दरः।**
**रतिप्रदा तथा केली केतकी सर्वनाशिनी।।**
**प्रतिष्ठां ते गमिष्यन्ति ये नराः प्लक्षरोपकाः।**

पद्मपुराणे सृष्टिखण्डे वृक्षारोपणं नाम षड्विंशोध्यायः।।

| **वृक्षनाम** | **फल** | **वृक्षनाम** | **फल** |
|---|---|---|---|
| अश्वत्थ (पीपल) | धनप्राप्ति | पाटल | पार्वतीप्रीति |
| अशोक | शोकनाश | शिंशप (शीसम) | सुन्दर स्त्री प्राप्ति |
| प्लक्ष (पाकड़) | यज्ञप्रद | कुन्द | गन्धर्वप्रीति |
| निम्ब | प्राणप्रद | विभितक (बहेड़ा) | दासवृद्धि |
| जम्बुकी (जामुन) | स्वर्गप्रद | ताल | संततिनाश |
| दाडिमी (अनार) | मर्यादाप्राप्ति | वकुल (मौलसरी) | दासप्राप्ति |
| डुम्बर (गुलर) | रोगनाश | नारिकेल | बहुभार्या प्राप्ति |
| पलाश | ब्रह्मप्राप्ति | द्राक्षा (अंगूर) | सुन्दर शरीर प्राप्ति |
| अर्कपुष्प (अकवन) | सूर्यप्रीति | केली | रतिप्रद |
| बिल्व | शिवप्राप्ति | केतकी | सर्वनाशिनी |

वृक्षों को लगाने से लाभ -

**वृक्षगुल्मलतावल्यस्त्वक्सारास्तृणजातयः।**
**षडेते वृक्षजातीयास्तासां रोपे फलं शृणु ।।**
**यः पुमान् रोपयेद् वृक्षान् छायापुष्पफलोपगान् ।**
**सर्वसत्त्वोपभोगाय स याति परमां गतिम् ।।**

वृक्ष-गुल्म-लता-वल्ली-त्वक्सार-तृण ये वृक्षों की छह प्रकार की जातियां कही गई हैं। जो व्यक्ति सभी प्राणियों के उपभोग के लिए छाया-पुष्प तथा फल वाले वृक्ष को लगाता है वह परं गति को प्राप्त करता है। अपि च-

**छायापुष्पोपगांस्त्रिंशत् फलपुष्पद्रुमांस्तथा ।**
**रोपयित्वा दशाम्रांस्तु नरो न नरकं व्रजेत्।।**
**देवदानवगन्धर्वाः किन्नरोरगगुह्यकाः ।**
**पशुपक्षीमनुष्यांश्च संश्रयन्ति मुदा द्रुमान्।।**
**पुष्पैः सुरगणाः सर्वे फलैश्च पितरः सदा।**
**छायया मे मनुष्यास्तु पशुपक्षिमृगास्तथा।।**
**पुष्पोपगन्धांश्च फलोपगन्धान् यः पादपान् रोपयते मनुष्यः।**
**समृद्धदेशे वरवेश्मवेद्यां लभेददधिष्ठानवरं स विप्रः।।**
**तस्मात् सुबहवो वृक्षाः रोप्याः श्रेयोऽभिवाञ्छता।**
**पुत्रवत् परिपाल्याश्च ते पुत्राः धर्मतः स्मृताः।।**

अर्थात् छाया फूल तथा फल वाले दस आम्र वृक्ष लगाने वाले को नरक नहीं मिलता। देव-दानव-गन्धर्व-किन्नर-सर्प-गुह्यक-पशु-पक्षी तथा मनुष्य ये सभी वृक्षों के आश्रित हैं। फूल वाले वृक्ष देवताओं को, फल वाले पितरों को, छायादार वृक्ष मनुष्य एवं पशु पक्षियों को संतुष्ट करते हैं। सुगन्धित फल फूल वाले वृक्ष लगाने वाला व्यक्ति सर्वसमृद्ध होता है तथा समृद्ध देश में सुप्रतिष्ठित होता है। एतदर्थ कल्याण चाहने वाले व्यक्ति को बहुत वृक्षों को लगा कर पुत्रवत् पालन करना चाहिए। क्योंकि वृक्षों को धर्मपुत्र कहा गया है। अतः वृक्षों को सन्तान की तरह पालन करने की बात कही गयी है।

वेद के नेत्र स्वरूप ज्योतिषशास्त्र में ग्रहशान्त्यर्थ उपचार हेतु ग्रह-नक्षत्र-सम्बन्धित वृक्षों को लगाना तथा उनके पूजन का विधान है। क्योंकि ग्रह-नक्षत्रों की अनुकूलता शुभ तथा ग्रह-नक्षत्रों की प्रतिकूलता अशुभ फल प्राप्ति का सूचक है। ग्रहों से सम्बन्धित वृक्षों/वनस्पतियों का वर्णन इस प्रकार है।

**अर्कः पलाशः खदिरः अपामार्गोऽथ पीपलः।**
**औदुम्बरः शमी दूर्वा कुशाश्च समिधाः क्रमात्।।**

अर्थात् सूर्य का वृक्ष अकवन, चन्द्र का पलाश, मंगल का खदिर, बुध का अपामार्ग, गुरु का पीपल, शुक्र का औदुम्बर, शनि का शमी, राहु का दूर्वा एवं केतु का कुशा निर्धारित किया गया है।

वर्तमान समय में समाज में जो अशान्ति, कलह तथा विभिन्न प्रकार की आधि-व्याधि (मानसिक एवं शारीरिक पीड़ा) देखने को मिलती है उसके समाधानार्थ इन नव-ग्रहों के वृक्षों को लगाकर उनकी सेवा करने से तत्तद् ग्रह सम्बन्धी रोगों/समस्याओं से छुटकारा मिल सकता है। यहाँ प्रसंग वश ग्रह सम्बन्धी रोगों/समस्याओं का संक्षेप में उल्लेख किया जाता है।

**सूर्य से विचारणीय विषयः-**

पिता, नेत्र, आत्मा, राजाश्रय, आत्म-साक्षात्कार, हड्डी, प्रताप, पेट, चौपाया पशु, पित्तज व्याधि आदि का विचार करते हैं।

**चन्द्र से विचारणीय विषयः-**

माता, बुद्धि, कफजरोग, क्षयरोग, मानसिक रोग, स्त्रीजाति, वैश्यजाति, कामज रोग, रक्त विकार, दुग्ध वाले वृक्ष, वर्षा काल आदि का विचार करते हैं।

**मंगल से विचारणीय विषयः-**

सहोदर भाई, हड्डी, व्रण, अग्नि से जलना, संग्राम, सैन्य शक्ति, खड्गादि शस्त्र, काम-क्रोध, जामाता, भूमि-भवन, परापवाद, दुःसाहस आदि का विचार करते हैं।

**बुध से विचारणीय विषयः-**

घोड़ा, वाणी, गला, शिशु, नाभि, बहिन, वात, मन पर संयम, तिरछा देखना, मामा आदि का विचार करते हैं।

**गुरु से विचारणीय विषयः-**

पुत्र, पेट की बीमारी, ज्येष्ठ भाई, देह का स्वास्थ्य, शरीर में वात-कफ, पिता के पिता अर्थात दादा, पति, आदि का विचार करते हैं।

**शुक्र से विचारणीय विषयः-**

शारीरिक सौन्दर्य, सुकुमारता, छोटा कद, यौवन, नौकर, नेत्र, स्त्री सुख, मृदुलता, कमजोरी, गुह्य अंग, भोग-विलास, आदि का विचार करते हैं।

**शनि से विचारणीय विषयः-**

जड़ता अथवा आलस्य, चमड़ा, विकृत अंग, पौरुषहीनता, बकरी, भैंस, कुत्ता, भृत्य, पैर सम्बन्धित रोग, दीर्घ रोग आदि का विचार किया जाता है।

**राहु से विचारणीय विषय** :-

कफ जन्य रोग, अन्त्यज, पाप स्त्री, अधार्मिक मनुष्य, गंदगी, हड्डी, मूर्खता, अकस्मात् घटना, स्नायु सम्बन्धित रोग आदि का विचार किया जाता है।

**केतु से विचारणीय विषयः-**

वायु विकार, क्षय रोग, पीड़ा, ज्वर, घाव, कुक्षि, आँख का दर्द, शत्रुओं से पीड़ा, फोड़े-फुंसी, पेट में तीव्र पीड़ा आदि का विचार किया जाता है।

ज्योतिष शास्त्र में इसके अतिरिक्त जातक के भावेश के अनुसार भी उनसे विचारणीय विषयों का विचार किया जाता है। जैसे लग्न से जातक का सम्पूर्ण शरीर, व्यक्तित्व, व्रण, चिह्न, आयु, यश-अपयश आदि का विचार किया जाता है।

द्वितीय भाव से धन-सम्पत्ति, नेत्र, मुख, वाणी, कुटुम्बी जन, भोजन आदि का विचार किया जाता है।

तृतीयभाव से बाहु, कण्ठ, कण्ठस्वर, पराक्रम, दुःसाहस, अनुज तथा चतुर्थभाव से भूमि-भवन-वाहन, ऐश्वर्य, मातृ-सुख, उपाधि वाली विद्या, चतुष्पद सुख, हृदय, फेंफड़ा आदि का विचार होता है।

पंचम से सन्तान, प्रिया, प्रियतम, स्त्री का बड़ा भाई, बहनोई, भाभी, गर्भ, बुद्धि, लाटरी, सिनेमा, पेट आदि का विचार किया जाता है। इसी प्रकार अन्य भावेशों से विचारणीय विषयों का विचार जातक ग्रन्थ से जानना चाहिए।

उपर्युक्त विवेचनों से सुस्पष्ट होता है की लौकिक जगत् में सुख और दुःख के साधक और बाधक ग्रह ही हैं। ग्रह प्रदत्त शुभाशुभ संकेत में न्यूनाधिकता अर्थात् अशुभ फल में अल्पता तथा शुभ फल में वृद्धि हेतु ग्रहोपचार करने की बात बताई गयी है। उसी सन्दर्भ में महर्षि पराशर ने ग्रह-समिधाओं का वर्णन किया है-

**सूर्यस्यार्कः पलाशश्च विधोर्भूनन्दनस्य तु।**
**खदिरोऽथ बुधस्यैव-मपामार्ग उदीरितः।।**
**पिप्पलो हि गुरोर्जन्तु-फलः शुक्रस्य सम्मतः।**
**शनेः शमी त्वहेर्दूर्वा कुशाः केतोः समित् स्मृताः।।**

बृहत्पाराशरहोराशास्त्रम्,ग्रहशान्त्याध्यायः, श्लोकसं २१-२२

उपर्युक्त इन नवग्रहों की समिधाओं का उपयोग ग्रह शान्त्यर्थ केवल हवन के लिए ही प्रयोग नहीं करना चाहिए अपितु इन वृक्षों/वनस्पतियों को रोप एवं सींच करके इनके सानिध्य में तत्तद् ग्रहों के मन्त्र जप करने से तत् सम्बन्धी ग्रह-बाधाओं से मुक्ति मिलती है। उदाहरण के लिए सूर्य नेत्र, हड्डी(अस्थि), राज्याधिकारी, पिता आदि का कारक माना जाता है। जिस किसी व्यक्ति को इनसे सम्बन्धित पीड़ा हो अर्थात् नेत्ररोग, अथवा हड्डी के रोग, राज्याधिकारियों की प्रतिकूलता तथा पिता के स्वास्थ्य तथा व्यवाहर में प्रतिकूलता हो तो ज्योतिष शास्त्रोक्त मुहूर्त में किसी सुरक्षित स्थान में अकवन का पौधा लगा कर उसके सान्निध्य में वेदोक्त/तन्त्रोक्त मन्त्रों का अनुष्ठान करने/करवाने से तत् सम्बन्धित पीड़ा से मुक्ति मिलती है। इस प्रकार किसी भी मानसिक रोगी को न केवल चन्द्र मन्त्र का जप करना चाहिये अपितु ज्योतिष शास्त्रोक्त मुहूर्त में सुरक्षित स्थान पर पलाश वृक्ष लगा कर तद् ग्रह सम्बन्धित अनुष्ठान करने से मानसिक रोग से मुक्ति मिलती है। इस प्रकार अनुष्ठान करने से न केवल मानसिक रोग से मुक्ति अपितु चन्द्र जन्य अन्य समस्त बाधाओं से मुक्ति मिलती है।

मंगल की प्रतिकूलता से रक्त विकार, जैसे रक्तचाप आदि रोग, भ्रातृसुख में अभाव अथवा कलह, काम-क्रोधजन्य विकार/रोग, जामाता से परेशानी, भूमि-भवन सम्बधित समस्यायें, परापवाद जैसे अपयश आदि की स्थिति में मंगल की आराधना के साथ मंगल के वृक्ष खदिर लगाकर उसकी सेवा के साथ मंगल का अनुष्ठान खदिर वृक्ष के सान्निध्य में करनी चाहिए।

बुध की प्रतिकूलता मे चर्मविकार, मातुल कष्ट, अथवा मातृकुल में विभिन्न परेशानियाँ, त्रिदोष(कफ-वात-पित्त)जन्य रोग, दन्त रोग, मुख रोग, निमोनिया ज्वर, व्रण, खांसी, ज्ञाति(कुल/खानदान) वर्ग, शिल्प से सम्बन्धित कार्य, वाणी जन्य विकार, घोडा, नपुंसकता जन्य व्याधि, गला से सम्बन्धित

रोग, तान्त्रिक अभिचार, नाभि के आसन्न रोग, शूद्रकृत् उपद्रव, गुप्तांग में विकार, बहन से सम्बन्धित सहयोग/पीड़ा, गाँव में यश-अपयश/मान-प्रतिष्ठा आदि का विचार बुध से करते हैं। उपर्युक्त ग्रह बाधाओं के निवारण हेतु बुध की समिधा चिड़चिड़ी/अपामार्ग/लटजीरा( Irritant Plant) लगाने एवं इसकी सेवा करने, इसके सान्निध्य में बुध मन्त्र जप/अनुष्ठान करने से महान् लाभ होता है।

इस प्रकार गुरु की समिधा पीपल है। सभी वनस्पतियों में पीपल का महत्त्वपूर्ण स्थान है। यह अहर्निश ऑक्सीजन का उत्सर्जन करने वाला वृक्ष है। **गुरु से विचारणीय विषय-** गुरु/अध्यापक की अनुकूलता/प्रतिकूलता, सन्तान के स्वास्थ्य एवं व्यवहार में बाधा, बड़े भाई से सम्बन्धित पीड़ा, गुरु का कोपभाजन होना, विद्यार्जन में बाधा, ब्राह्मण, गाय, कोष, प्रताप, कीर्ति, उदर रोग, पितामह, अग्रज, राजा, विधिविभाग, राजसम्मान, उरु स्थल, देव-कोप, मित्र, वक्तृत्व शक्ति, वातज/कफज रोग, उहापोहशक्ति, पतिसुख आदि का विचार करते हैं। गुरु की प्रतिकूलता से मधुमेह रोग से पीड़ा होती है। उपर्युक्त की प्रतिकूलता अथवा तद् जन्य सुख के अभाव में पीपल वृक्ष अवश्य लगाना चाहिए। जिस कन्या के पाणिग्रहण में बाधा उपस्थित हो उसे गुरुवार का व्रत करने, पीपल वृक्ष लगाने तथा उसके सान्निध्य में बृहस्पति का अनुष्ठान करने से आशातीत सफलता मिलती है।

**शुक्र से विचारणीय विषय-**दाम्पत्यसुखबाधा, स्त्रीजाति, ब्राह्मण, भार्या, मैथुन, आज्ञा, वाहनसुख, हाथी-घोडा, नृत्य-गीत, वाद्य, अभिनय, युवावस्था, तैराकी, नौकर, भाग्य, सौन्दर्य, सुकुमारता, राज्य, माला, इत्र, शारीरिक सौन्दर्य, अल्पभोजी, भोजन, विभिन्न कलाओं में निपुणता, वीर्य, जल क्रीडा, दिन में जन्म हो तो मातृकारक, शारीरिक निर्बलता एवं सप्तमभाव से सम्बन्धित सुख में बाधा होती है। शुक्र यदि प्रतिकूल हो अथवा सप्तम भाव प्रदूषित /पीड़ित हो तो उपर्युक्त पदार्थों में न्यूनता उपस्थित करता है। इस प्रकार शुक्र जन्य बाधा के निवारण हेतु औदुम्बर( गुलर ) का वृक्ष लगाना चाहिए। एवं उसके सान्निध्य में शास्त्रोक्त शुक्र का व्रत करने एवं मन्त्र जप करने से तत्सम्बन्धी कष्ट का निवारण होता है।

**शनि की प्रतिकूलता से** विविध रोग, प्रतिपक्षियों का विरोध, जड़ता, आलस्य, विविध दुःख, चण्डाल आदि नीच जाति, वनवासी, स्वामी, आयु, नपुंसकता, दासता का कर्म, अधार्मिक कृत्य, पौरुष हीनता, मिथ्या भाषण, निकृष्ट विचार, दुष्टों से मैत्री, रात्रि में जन्म हो तो पिता का कारक, कृषि द्वारा जीवन यापन, लंगड़ापन, जिलाने का उपाय, पतन, भ्रमण, शल्य विद्या, तामसिक गुण, विष, कठोरता, भय, सार्वभौम सत्ता, बकरा, भैंस, कुत्ता, चोरी, चित्त की कठोरता, हृदय की उदारता, अपूर्णता, हीनता, अभाव, चमड़ा, पत्थर आदि पदार्थों का प्रतिनिधित्व करता है। इसके साथ ही कुण्डली में त्रिक भावों से विचारणीय विषयों का प्रतिनिधित्व करता है। इस प्रकार किसी भी प्रकार की पीड़ा हो तो शनि प्रदत्त पीड़ा समझनी चाहिए। इनके उपशमनार्थ शुभ मुहूर्त में शमी वृक्ष लगा कर उसकी सेवा करते हुए शास्त्रोक्त शनि का अनुष्ठान करने से अशुभ फल का ह्रास एवं शुभ फल की वृद्धि होती है।

**राहु की प्रतिकूलता से** दुष्ट स्त्री, अधार्मिक मनुष्य, द्युत, संध्या काल, विदेश गमन, अस्थि एवं पिलिहर रोग, असत्य आचरण, इन्द्रजाल, तांत्रिक प्रयोग, नीच जन, वातज-कफज रोग, सकल गुप्त आचरण, लैब में भी रोगों का सुस्पष्ट ना होना, मृत्यु की प्रकृति, माता-पिता, नाना, खाँसी, श्वॉस सम्बन्धी रोग, प्रताप, कठोर भाषण, अभाव आदि से पीड़ा होती है।

**इसी प्रकार केतु की प्रतिकूलता से** कुत्ता, चिकित्सक, क्षय रोग, विविध पीड़ा, वातज रोग, तन्त्र-मन्त्र, व्रण, पत्थर, कुक्षी एवं नेत्र विकार, अज्ञानता, संसार से विरक्ति, शत्रुबाधा तथा मंगलग्रह से सम्बन्धित पीड़ा भी होती है। राहु केतु की समिधा क्रमशः दूर्वा एवं कुश है। राहु-केतु बाधा के उपशमनार्थ क्रमशः दूर्वा एवं कुश को लगाकर राहु-केतु के अनुष्ठान द्वारा ग्रहपीड़ा से मुक्ति मिलती है।

वनस्पतियों/वृक्षों के इन्हीं विशेषताओं को देखते हुए प्राचीन ऋषियों ने वृक्षों को लगाने के साथ इनके संरक्षण, संवर्धन करने की बात कही है। जैसे-

**अतीतानागते चोभे पितृवंशं च भारत!।**
**तारयेद् वृक्षरोपी च तस्माद् वृक्षांश्च रोपयेत्।।**

महाभारत अनुशासनपर्व ५८/२६

अर्थात् हे भरतनन्दन! वृक्ष लगाने वाला पुरुष अपने मरे हुए पूर्वजों और भविष्य में होने वाले सन्तानों का तथा समस्त पितृकुल का उद्धार कर देता है। इसीलिए वृक्षों को अवश्य लगाना चाहिए।

इस प्रकार वृक्षों/वनस्पतियों को लगाकर न केवल हम अपना तथा अपने परिवार का अपितु सकल सृष्टि का कल्याण कर सकते हैं।

**।। इति शम् ।।**

## अथ प्रातःस्मरणीयगणेशस्तोत्रम्

ॐ प्रणम्य शिरसा देवं गौरीपुत्रं विनायकम्।
भक्तावासं स्मरेन्नित्यमायुष्कामार्थसिद्धये।१।

प्रथमं वक्रतुण्डञ्च एकदन्तं द्वितीयकम् ।।
तृतीयं कृष्णपिङ्गाक्षं गजवक्त्रं चतुर्थकम् ।।२।।

लम्बोदरं पञ्चमञ्च षष्ठं विकटमेव च ।।
सप्तमं विघ्नराजञ्च धूम्रवर्णं तथाष्टमम् ।।३।।

नवमं भालचन्द्रञ्च दशमन्तु विनायकम् ।।
एकादशं गणपतिं द्वादशन्तु गजाननम् ।।४।।

द्वादशैतानि नामानि त्रिसन्ध्यं यः पठेन्नरः।।
नास्ति विघ्नभयं तस्य सर्वसिद्धिं लभेद् ध्रुवम् ।।५।।

विद्यार्थी लभते विद्यां धनार्थी लभते धनम् ।।
पुत्रार्थी लभते पुत्रान् मोक्षार्थी लभते गतिम् ।।६।।

जपेद् गणपतिस्तोत्रं षड्भिर्मासैः फलं लभेत् ।।
संवत्सरेण सिद्धिञ्च लभते नात्र संशयः ।।७।।

अष्टभ्यो ब्रह्मणेभ्यश्च लिखित्वा यः समर्पयेत्।।
तस्य विद्या भवेत् सद्यो गणेशस्य प्रसादतः।। ८।।

**श्रीनारदपुराणे सङ्कष्टनाशनं नाम गणेशस्तोत्रं सम्पूर्णम् ।।**

## अथनवग्रहस्तोत्रम्

जपाकुसुमसंकाशं काश्यपेयं महाद्युतिम्।
तमोऽरिं सर्वपापघ्नं प्रणतोऽस्मि दिवाकरम् ।।१।।
दधिशङ्खतुषाराभं क्षीरोदार्णवसम्भवम् ।।
नमामि शशिनं सोमं शम्भोर्मुकुटभूषणम् ।।२।।
धरणीगर्भसम्भूतं विद्युत्कान्तिसमप्रभम् ।।
कुमारं शक्तिहस्तं तं मङ्गलं प्रणमाम्यहम् ।।३।।
प्रियङ्गुकलिकाश्यामं रूपेणाप्रतिमं बुधम् ।।
सौम्यं सौम्यगुणोपेतं तं बुधं प्रणमाम्यहम् ।।४।।
देवानां च ऋषीणां च गुरुं काञ्चनसंनिभम् ।।
बुद्धिभूतं त्रिलोकेशं तं नमामि बृहस्पतिम् ।।५।।
हिमकुन्दमृणालाभं दैत्यानां परमं गुरुम् ।।
सर्वशास्त्रप्रवक्तारं भार्गवं प्रणमाम्यहम् ।।६।।
नीलाञ्जनसमाभासं रविपुत्रं यमाग्रजम् ।।
छायामार्त्तण्डसम्भूतं तं नमामि शनैश्चरम् ।।७।।
अर्धकायं महावीर्यं चन्द्रादित्यविमर्दनम् ।।
सिंहिकागर्भसम्भूतं तं राहुं प्रणमाम्यहम्।।८।।
पलाशपुष्पसङ्काशं तारकाग्रहमस्तकम् ।।
रौद्रं रौद्रात्मकं घोरं तं केतुं प्रणमाम्यहम् ।।९।।

इति व्यासमुखोद्गीतं यः पठेत् सुसमाहितः।। दिवा वा यदि वा रात्रौ विघ्नशान्तिर्भविष्यति ।।१०।।
नरनारीनृपाणाञ्च भवेद्दुःस्वप्ननाशनम् ।। ऐश्वर्यमतुलं तेषामारोग्यं पुष्टिवर्धनम् ।। ११।।
ग्रहनक्षत्रजाः पीडास्ताडकाग्निसमुद्भवाः ।। ताः सर्वाः प्रशमं यान्ति व्यासो ब्रूते न संशयः ।।

**।। महर्षिव्यासविरचितं नवग्रहस्तोत्रं सम्पूर्णम् ।।**

**नवग्रहाणां समिधाः**–अर्कः पलाशः खदिरो ह्यपामार्गश्च पीपलः ।
उदुम्बरः शमी दूर्वा कुशाश्च समिधः क्रमात् ।।

याज्ञवल्क्यसंहिता-१/३०२

## अथ कनकधारास्तोत्रम्

अङ्गं हरेःपुलकभूषणमाश्रयन्ति
भृङ्गाङ्गनेव मुकुलाभरणं तमालम् ।
अङ्गीकृताखिलविभूतिरपाङ्गलीला
माङ्गल्यदाऽस्तु मम मङ्गलदेवतायाः ।।१ ।।
मुग्धा मुहुर्विदधती वदने मुरारेः
प्रेमत्रपाप्रणिहितानि गतागतानि ।
माला दृशोर्मधुकरीव महोत्पले या
सा मे श्रियं दिशतु सागरसम्भवायाः ।।२ ।।
विश्वामरेन्द्रपदविभ्रमदानदक्ष-
मानन्दहेतुरधिकं मुरविद्विषोऽपि ।
ईषन्निषीदतु मयि क्षणमीक्षणार्ध-
मिन्दीवरोदरसहोदरमिन्दिरायाः ।।३ ।।
आमीलिताक्षमधिगम्य मुदा मुकुन्द-
मानन्दकन्दमनिमेषमनङ्गतन्त्रम्।
आकेकरस्थितकनीनिकपक्ष्मनेत्रं
भूत्यै भवेन्मम भुजङ्गशयाङ्गनायाः ।।४।।
बाह्वन्तरे मधुजितः श्रितकौस्तुभे या
हारावलीव हरिनीलमयी विभाति ।
कामप्रदा भगवतोऽपि कटाक्षमाला
कल्याणमावहतु मे कमलालयायाः ।।५ ।।
कालाम्बुदालिललितोरसि कैटभारे-
र्धाराधरे स्फुरति या तडिदङ्गनेव।
मातुः समस्तजगतां महनीयमूर्ति-
र्भद्राणि मे दिशतु भार्गवनन्दनायाः ।।६ ।।
प्राप्तं पदं प्रथमतः किल यत्प्रभावान्-
माङ्गल्यभाजि मधुमाथिनि मन्मथेन ।
मय्यापतेत्तदिह मन्थरमीक्षणार्धं
मन्दालसं च मकरालयकन्यकायाः ।।७ ।।
दद्याद्दयानुपवनो द्रविणाम्बुधारा-
मस्मिन्नकिञ्चनविहङ्गशिशौ विषण्णे ।
दुष्कर्मघर्ममपनीय चिराय दूरं
नारायणप्रणयिनीनयनाम्बुवाहः ।।८ ।।
इष्टा विशिष्टमतयोऽपि यया दयार्द्र-
दृष्ट्यात्रिविष्टपपदं सुलभं लभन्ते ।
दृष्टिः प्रहृष्टकमलोदरदृप्तिरिष्टां
पुष्टिं कृषीष्ट मम पुष्करविष्टरायाः ।।९ ।।
गीर्देवतेति गरुडध्वजसुन्दरीति
शाकम्भरीति शशिशेखरवल्लभेति ।
सृष्टिस्थितिप्रलयकेलिषु संस्थितायै
तस्यै नमस्त्रिभुवनैकगुरोस्तरुण्यै।।१० ।।
श्रुत्यै नमोऽस्तु शुभकर्मफलप्रसूत्यै
रत्यै नमोऽस्तु रमणीयगुणार्णवायै।
शक्त्यै नमोऽस्तु शतपत्रनिकेतनायै
पुष्ट्यै नमोऽस्तु पुरुषोत्तमवल्लभायै ।।११ ।।
नमोऽस्तु नालीकनिभाननायै नमोऽस्तु दुग्धोदधिजन्मभूत्यै ।
नमोऽस्तु सोमामृतसोदरायै नमोऽस्तु नारायणवल्लभायै ।।१२ ।।
सम्पत्कराणि सकलेन्द्रियनन्दनानि
साम्राज्यदानविभवानि सरोरुहाक्षि।
त्वद्वन्दनानि दुरिताहरणोद्यतानि
मामेव मातरनिशं कलयन्तु मान्ये! ।।१३ ।।

यत्कटाक्षसमुपासनाविधिः सेवकस्य सकलार्थसम्पदः।
सन्तनोति वचनाङ्गमानसैस्त्वां मुरारिहृदयेश्वरीं भजे।।१४।।
सरसिजनिलये सरोजहस्ते धवलतमांशुकगन्धमाल्यशोभे ।
भगवति! हरिवल्लभे! मनोज्ञे! त्रिभुवनभूतिकरि! प्रसीद मह्यम् ।।१५।।
दिग्घस्तिभिःकनककुम्भमुखावसृष्टस्वर्वाहिनीविमलचारुजलप्लुताङ्गीम्।
प्रातर्नमामि जगतां जननीमशेषलोकाधिनाथगृहिणीममृताब्धिपुत्रीम् ।।१६।।
कमले! कमलाक्षवल्लभे! त्वं करुणापूरतरङ्गितैरपाङ्गैः।
अवलोकय मामकिञ्चनानां प्रथमं पात्रमकृत्रिमं दयायाः।।१७।।
स्तुवन्ति ये स्तुतिभिरमूभिरन्वहं त्रयीमयीं त्रिभुवनमातरं रमाम्।
गुणाधिका गुरुतरभाग्यभागिनो भवन्ति ते भुवि बुधभाविताशयाः ।।१८।।
।। श्रीभगवत्पादशङ्करविरचितं कनकधारास्तोत्रं सम्पूर्णम् ।।

## अथ अन्नपूर्णास्तोत्रम्

नित्यानन्दकरी वराभयकरी सौन्दर्यरत्नाकरी
निर्धूताखिलघोरपावनकरी प्रत्यक्षमाहेश्वरी ।
प्रालेयाचलवंशपावनकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ।।१।।
नानारत्नविचित्रभूषणकरी हेमाम्बराडम्बरी
मुक्ताहारविलम्बमानविलसद्वक्षोजकुम्भान्तरी ।
काश्मीरागरुवासिताङ्गरुचिरा काशीपुराधीश्वरी ।।भिक्षां देहि ।।२।।
योगानन्दकरी रिपुक्षयकरी धर्मार्थनिष्ठाकरी
चन्द्रार्कानलभासमानलहरी त्रैलोक्यरक्षाकरी ।
सर्वैश्वर्यसमस्तवाञ्छितकरी काशीपुराधीश्वरी ।।भिक्षां देहि ।।३ ।।
कैलासाचलकन्दरालयकरी गौरी उमा शङ्करी
कौमारी निगमार्थगोचरकरी ओंकारबीजाक्षरी ।
मोक्षद्वारकपाटपाटनकरी काशीपुराधीश्वरी ।। भिक्षां देहि ।।४ ।।
दृश्यादृश्यविभूतिवाहनकरी ब्रह्माण्डभाण्डोदरी
लीलानाटकसूत्रभेदनकरी विज्ञानदीपाङ्कुरी ।
श्रीविश्वेशमनःप्रसादनकरी काशीपुराधीश्वरी ।। भिक्षां देहि ।।५ ।।
उर्वीसर्वजनेश्वरी भगवती मातान्नपूर्णेश्वरी
वेणीनीलसमानकुन्तलहरी नित्यान्नदानेश्वरी ।
सर्वानन्दकरी सदा शुभकरी काशीपुराधीश्वरी ।। भिक्षां देहि ।।६।।
आदिक्षान्तसमस्तवर्णनकरी शम्भोस्त्रिभावाकरी
काश्मीरात्रिजलेश्वरी त्रिलहरी नित्याङ्कुरा शर्वरी ।
कामाकाङ्क्षकरी जनोदयकरी काशीपुराधीश्वरी ।। भिक्षां देहि ।।७ ।।
देवी सर्वविचित्ररत्नरचिता दाक्षायणी सुन्दरी
वामं स्वादु पयोधरप्रियकरी सौभाग्यमाहेश्वरी ।
भक्ताभीष्टकरी सदाशुभकरी काशीपुराधीश्वरी।। भिक्षां देहि ।।८।।
चन्द्रार्कानलकोटिकोटिसदृशा चन्द्रांशुबिम्बाधरी
चन्द्रार्काग्निसमानकुन्तलधरी चन्द्रार्कवर्णेश्वरी ।
मालापुस्तकपाशसाङ्कुशधरी काशीपुराधीश्वरी ।। भिक्षां देहि ।।९।।
क्षत्रत्राणकरी महाऽभयकरी माता कृपासागरी
साक्षान्मोक्षकरी सदा शिवकरी विश्वेश्वरश्रीधरी ।
दक्षाक्रन्दकरी निरामयकरी काशीपुराधीश्वरी ।। भिक्षां देहि ।।१०।।
अन्नपूर्णे सदापूर्णे शङ्करप्राणवल्लभे।
ज्ञानवैराग्यसिद्ध्यर्थं भिक्षां देहि च पार्वति।।११।।
माता च पार्वती देवी पिता देवो महेश्वरः।
बान्धवाः शिवभक्ताश्च स्वदेशो भुवनत्रयम्।।१२।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छङ्करभगवतः कृतौ अन्नपूर्णास्तोत्रं सम्पूर्णम्।

## अथ श्रीसूक्तम्

ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम्।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आ वह।। १।।
तां म आ वह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ।।२।।
अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम् ।
श्रियं देवीमुप ह्वये श्रीर्मा देवी जुषताम् ।।३।।
कां सोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम्।
पद्मेस्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ४।।
चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् ।
तां पद्मनीमीं शरणं प्रपद्ये अलक्ष्मीर्मे नश्यतां त्वां वृणे ।।५।।
आदित्यवर्णे तपसोऽधि जातो वनस्पतिस्तव वृक्षोऽथ बिल्वः ।
तस्य फलानि तपसा नुदन्तु या अन्तरा याश्च बाह्या अलक्ष्मीः।।६।।
उपैतु मां देवसखः कीर्तिश्च मणिना सह।
प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे ।। ७।
क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम्।
अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ।।८।।
गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ।।९।।
मनसः काममाकूतिं वाचः सत्यमशीमहि।
पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ।।१०।।
कर्दमेन प्रजा भूता मयि सम्भव कर्दम।
श्रियं वासय मे कुले मातरं पद्ममालिनीम् ।।११।।
आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे।
नि च देवीं मातरं श्रियं वासय मे कुले ।।१२।।
आर्द्रां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम्।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आ वह ।।१३।।
आर्द्रां यः करिणीं यष्टिं सुवर्णां हेममालिनीम्।
सूर्यां हिरण्मयीं लक्ष्मीं जात वेदो म आ वह ।।१४।।
तां म आ वह जातवेदो लक्ष्मीमनपगामिनीम्।
यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान् विन्देयं पुरुषानहम् ।।१५।।
यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम्।
सूक्तं पञ्चदशर्चं च श्रीकामः सततं जपेत् ।।१६।।

**।। इति श्रीसूक्तं सम्पूर्णम् ।।**

## लक्ष्मीप्रीत्यर्थं पठनीयाः केचन मन्त्राः

पद्मानने पद्मिनि पद्मपत्रे पद्मप्रिये पद्मदलायताक्षि।
विश्वप्रिये विश्वमनोऽनुकूले त्वत्पादपद्म मयि सन्निधत्स्व।।
पद्मानने पद्मऊरू पद्माक्षी पद्मसम्भवे।
तन्मे भजसि पद्माक्षि येन सौख्यं लभाम्यहम्।।
अश्वदायी गोदायी धनदायी महाधने।
धनं मे जुषतां देवि सर्वकामांश्च देहि मे।।
पुत्र-पौत्र-धनं धान्यं हस्त्यश्वादिगवेरथम्।
प्रजानां भवती माता आयुष्मन्तं करोतु मे।।
विष्णुपत्नीं क्षमां देवीं माधवीं माधवप्रियाम्।
लक्ष्मीं प्रियसखीं देवीं नमाम्यच्युतवल्लभाम्।।

## श्रीजगन्नाथाष्टकम्

कदाचित्कालिन्दीतटविपिनसङ्गीतकरवो मुदाऽऽभीरीनारीवदनकमलाऽऽस्वादमधुपः ।
रमा-शम्भुर्ब्रह्मामरपतिगणेशार्च्चितपदो जगन्नाथस्वामी नयनपथगामी भवतु मे ।।१।।
भुजे सव्ये बेणुं शिरसि शिखिपिच्छं कटितटे दुकूलं नेत्रान्ते सहचर-कटाक्षं विदधते ।
सदा श्रीमद्वृन्दावनवसतिलीलापरिचयो जगन्नाथस्वामी नयनपथगामी भवतु मे ।।२।।
महाम्भोधेस्तीरे कनकरुचिरे नीलशिखरे वसन् प्रासादान्तःसहजबलभद्रेण बलिना ।
सुभद्रामध्यस्थः सकलसुरसेवाऽवसरदो जगन्नाथस्वामी नयनपथगामी भवतु मे ।।३।।
कृपापारावारःसजलजलदश्रेणिरुचिरो रमावाणीरामःस्फुरदमलपद्मेक्षणमुखः ।
सुरेन्द्रैराराध्यःश्रुतिगणशिखा-गीतचरितो जगन्नाथस्वामी नयनपथगामी भवतु मे ।।४।।
रथारुढो गच्छन् पथि मिलित-भूदेव-पटलैः श्रुतिप्रादुर्भावं प्रतिपदमुपाकर्ण्य सदयः ।
दयासिन्धुर्बन्धुः सकलजगतां सिन्धुसुतया जगन्नाथस्वामी नयनपथगामी भवतु मे ।।५।।
परं ब्रह्मापीडःकुबलयदलोत्फुल्लनयनो निवासी नीलाद्रौ निहितचरणोऽनन्तशिरसि ।
रसानन्दो राधा-सरसवपुरालिङ्गनसुखो जगन्नाथस्वामी नयनपथगामी भवतु मे ।।६।।
न वै प्रार्थ्यं राज्यं न च कनकमाणिक्यविभवं न याचेऽहं रम्यां निखिलजनकाम्यां वरवधूम् ।
सदा काले काले प्रमथपतिना गीतचरितो जगन्नाथस्वामी नयनपथगामी भवतु मे ।।७।।
हर त्वं संसारं दुरतरमसारं सुरपते! हरत्वं पापानां विततिमपरां यादवपते! ।
अहो दीनेऽनाथे निहितचरणो निश्चितमिदं जगन्नाथस्वामी नयनपथगामी भवतु मे ।८।

**इति जगन्नाथाष्टकं सम्पूर्णम्**

ॐ पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ।।
सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः । सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत् ।।

**।।ॐ शान्तिःशान्तिः शान्तिः ।।**

अपने जन्मपत्री में अपने भविष्य को देखें- जन्मपत्र-निर्माणशुल्क का विवरण निम्नलिखित है। जन्मपत्र बड़ा - ५१५१/- जन्मपत्र मध्यम- २५०१/-
जन्मपत्र छोटा- ११०१/- वर्षफल- २१५१/- मेलापक- ५५१/-
जन्मपत्रविश्लेषण- ११००/-
विशेषः- जन्मपत्र निर्माण शुल्क मनिआर्डर अथवा रेखांकित बैकड्राफ्ट के साथ निम्नलिखित विवरण अवश्य लिखें। यथा- जन्मदिनाङ्क, दिन, जन्मसमय, जन्मस्थान, जातक का नाम, लिङ्ग, पितृनाम। वि.द्र.:- **www.vedanandashram.in**

## ज्योतिर्विज्ञान-अनुसन्धान-केन्द्रम्

**श्रीजगन्नाथपञ्चाङ्गकार्यालयः**

वेदानन्द-आश्रमः, न्यू वेलबनवा, (श्रीकृष्णनगरम्) टाउन थाना से पूर्व मोतिहारी - ८४५४०१

**तमसो मा ज्योतिर्गमय**

क्या आप जानते हैं? कर्म भाग्य के विना अपूर्ण तथा असफल एवं भाग्य भी समुचित कर्म के अभाव में मन्द पड़ जाता है। समुद्रमन्थन से उत्पन्न लक्ष्मी तथा हलाहल विष भाग्य-वश ही भगवान विष्णु तथा सकल कल्याणमय भगवान शिव को प्राप्त हुए हैं। आप भी अपने भाग्य के आइने से अनुचित भविष्य के प्रतिकूलताओंसे सचेष्ट रह सकते हैं। काल का समुचित ज्ञान एवं देवाराधन के साथ अपने अनुकूल रत्नधारण आपके भाग्य के सम्वर्धन में सहायक सिद्ध हो सकते है। अतः अब विलम्ब क्यों? आप श्रीजगन्नाथपञ्चाङ्ग कार्यालय में सम्पर्क कर सकते हैं।

**केन्द्र-संस्थापकः-** स्व. पं. बैद्यनाथपाठकः

**संयोजकः**

**प्रो. मदनमोहनपाठकः**

(अध्यक्षः- ज्योतिषविभागः,केन्द्रीयसंस्कृतविश्वविद्यालयः,लखनऊ - २२६०१०)
मोबाइलः-९४५५४३७०६६, ७००७७९७८१३, लखनऊ-(उ.प्र.) **www.vedanandashram.in**
०९००६८-०४९३३ मोतिहारी- (बिहार)

**सदस्यगणाः -**

| | |
|---|---|
| पं. नन्दकिशोरपाठकः- ९५४६८-५९००८ | पं. जगदीशपाठकः- ९८०१६-८७५११ |
| पं. अशोकपाठकः- ९८३५२-२७४३२ | पं.कौशलकिशोरपाठकः- ९४३१४-३५८६२ |
| पं. राघवतिवारी - ९१६२२-८७७९२ | पं. कृष्णाकान्ततिवारी - ९००६२-५०५८७ |
| पं. राजकुमारतिवारी - ७६५४६-९६९९५ | पं. मिथिलेशपाठकः- ९९०५०-३४९२० |
| डॉ. पुरुषोत्तमकुमारशास्त्री ७५४२८३३१३१ | डॉ. बालकिशोरशास्त्री - ९१६२२-८७७९२ |
| पं. ओमप्रकाशशास्त्री - ९१९९७-४३२२८ | डॉ.आनन्दप्रकाशपाठकः - ७९०५१३५ ३९१ |

संरक्षकगणाः- **प्रो. सर्वनारायणझा**(निदेशकः, केन्द्रीयसंस्कृतविश्वविद्यालयः, लखनऊपरिसरः)

| | |
|---|---|
| पं. इन्द्रासनचौबे- ९४३१५-००४८३ | पं.श्रीसुशीलपाण्डेयः - ९४३१२-०४२५३ |
| पं. हरेकृष्णमिश्रः - ९४३१६-५२५१७ | पं. ओंकारपाण्डेयः- ९९३१०-९६३७७ |
| पं. दिनेश्वरपाठकः - ९७७१७६४२३२ | श्रीविभूतिनारायणसिंहः- ९४३१४-२९२०७ |
| पं. संजयकुमारपाण्डेयः- ९८३५२-५२९५२ | पं. रविशंकरतिवारीः- ९४३०९-८४२२९ |
| पं. जितेन्द्रपाण्डेयः- ७६३१९-९०६८३ | श्रीसंतोषकुमारसिंहः(अधिवक्ता)-९४३००-०८५८१ |
| पं. वीरेन्द्रपाण्डेयः- ९६६१६-०१८७१ | पं. बिन्दुपाठकः- ९८३५०-५५६६९ |
| पं. वेदप्रकाशपाठकः - ८७६५१ ७१५३२ | श्रीबबनसिंहः- ९४३१२-६९९४१ |



महामहोपाध्याया:पण्डितकल्याणदत्तशर्माण:
पञ्चाङ्गपथप्रदर्शका: अस्मद्गुरुचरणा:



पञ्चाङ्गकर्त्तु: पूज्यपितृचरणा:
पण्डितबैद्यनाथपाठकमहोदया:



पञ्चाङ्गकर्त्तु: पूज्यामातृचरणा:
लालमतीदेवीमहोदया:




पुरीधाम्नि श्रीजगन्नाथपञ्चाङ्गस्य (दशमाङ्कस्य) लोकार्पणं कुर्वन्त: अस्मत्कुलपतय: **श्रीमदाचार्या: राधावल्लभत्रिपाठिमहोदया:**, तेषां वामभागे पुरी-विद्यापीठस्य प्राचार्या: प्रो.जी.गङ्गन्नामहोदया:, दक्षिणे आन्ध्र-प्रदेशस्थ-तिरुपति-संस्कृत-विद्यापीठस्य कुलपतय: श्रीमदाचार्या: हरेकृष्णशतपथीमहोदया:, तत्रत्या एव कुलपतिचरा: प्रो.डी. प्रहलादाचार्यवर्या:।



श्रीइन्दिरारमणरामानुजदासजी
अध्यक्ष
श्रीरामचन्द्रस्वामीसेवाश्रम




चतुर्दशअङ्कस्य लोकार्पणं कुर्वन्त: उत्तरप्रदेशशासनस्य विधानसभाध्यक्षा: मा. श्रीमाताप्रसादपाण्डेयमहोदया:, प्रौ.शिक्षामन्त्रिण: मा. श्रीब्रह्माशङ्करत्रिपाठिन:, सम्पूर्णानन्दसंस्कृत विश्वविद्यालयस्य कुलपतिचरा: प्रो. अशोककुमारकालियामहोदया:, लखनऊपरिसरप्रचार्या: प्रो. सुरेन्द्रझामहोदया:, संस्थानकुलसचिवा: प्रो. के. वी. सुब्बारायुडुमहोदया:,बी. एच. यू. त: वेदविज्ञानसङ्कायाध्यक्षचरा: प्रो. रामचन्द्रपाण्डेयमहोदया:। दिनाङ्क- १/१२/२०१२ शनिवासर:

।। ऊँ श्रीमते रामानुजाय नमः ।।

# श्री रामचन्द्रस्वामी सेवाश्रम

## लोकनाथरोड, पुरी–2


स्व॰ श्रीरामचन्द्रस्वामी
आद्य पंचांग प्रकाशक


श्रीइन्दिरारमणरामानुजदासजी
अध्यक्ष, श्रीरामचन्द्रस्वामीसेवाश्रम

पुरीशहर में स्थित भगवान लोकनाथजी के मन्दिर से कुछ ही दूर दक्षिण में स्थित स्वामी जी की यह तपः स्थली अब असंख्य निर्धन जनता जनार्दन के स्वास्थ्य-सेवा का मुख्य केन्द्र बन गया है । इस सेवाश्रम द्वारा निर्धनों के शारीरिक रोग निवारणार्थनिःशुल्क चिकित्सा एवं औषधि की व्यवस्था की जाती है । यहाँ वर्ष में विशेष रूप से एक बार मुफ्त आँख का आपरेशन देश के लब्ध-प्रतिष्ठित चक्षुःविशेषज्ञों की सहायता से कराया जाता है। जिससे इस वर्ष तक इस संस्था के द्वारा आयोजित अनेक नेत्र-चिकित्सा-शिविरोंमें शताधिक चक्षुःहीन लोगों को नयनज्योति की प्राप्ति हुई है ।

शिक्षा मनुष्य जीवन की प्रथम आवश्यकता है । इस भावना से आप्लावित स्वामीजी ने आवासीय वेदविद्यालय की व्यवस्था की है। इसे कालान्तर में आध्यात्मिक वैदिकशोधसंस्थान बनाने का विचार था लेकिन इसके मध्य आश्रम के संस्थापक महन्थश्रीरामचन्द्ररामानुजदासजी का गोलोक में महाप्रयाण हो गया। जिससे सनातन वैदिकसंस्कृति की अपूरणीय क्षतिहुई । लेकिन श्रीजगन्नाथमहाप्रभुजी की कृपा से अब इस इस पुनीत कार्य को जियर स्वामी मठ के यशस्वी श्रीमहन्थ तथा इस सेवाश्रम के अध्यक्ष स्वामी श्रीइन्दिरारमणरामानुजदासजी महाराज ने दायित्व सम्भाला है । इनके निर्देश से यह संस्था अनुदिन विकासोन्मुख होते हुए यशस्विता को प्राप्त कर रही है। आश्रम संस्थापक स्वामीजी की तरह इनकी भी अभिरूचि संस्कृत तथा वैदिक संस्कृति की रक्षा में सर्वदा रहती है । इसके लिए श्रीजगन्नाथ सम्पादकमण्डल इनका हार्दिक अभिनन्दन करता है । **- आइये हम सब मिलकर स्वामीजी के जनहित यज्ञ में तन-मन- धनसे सहयोग प्रदानकर पुण्य तथा यश के भागी बनें ।**


पञ्चाङ्गकर्त्ता प्रधानसम्पादकश्च -
प्रो. मदनमोहनपाठकः

**प्रकाशकः** - ज्योतिर्विज्ञान-अनुसन्धान-केन्द्रम्, वेदानन्दाश्रमः, खरगापुर, गोमतीनगर, लखनऊ- २२६०१० (उ.प्र.)
www.vedanandashram.in
ISSN-2320-3501